Colgate

# Dr. Rabbit's Puzzle

Smita has an appointment for her dental checkup.
Can you find the way for her in 20 seconds or less ?

START
SCHOOL
DENTIST
FINISH
BOOK STORE

An Amazing Trip!



Colgate



Bright Smiles, Bright Futures™





संस्कृत

# चन्दमामा

दिस्मबर १९९९

## अन्तरङ्गम्

सम्पुट : - १५ साञ्चका - २




Printed and published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd, Chennai-600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai 600 026. Editor: Viswam















प्रतिकृतिमूल्यं रू. १०
वार्षिकं ग्राहकशुल्कं रू.१२०

Founded by
CHAKRAPANI
B. NAGI REDDI
Editor
VISWAM
Editorial Advisors
RUSKIN BOND
MANOJ DAS
Designing & Technical Advisor
UTTAM
Publisher
B. VISWANATHA REDDI
Director Marketing
V. MADHUSUDHAN

**HEAD OFFICE**
Chandamama Buildings
Vadapalani, Chennai-600 026
Tel: 4841778 Fax: 4835298

**OTHER OFFICES**
BHUBANESWAR
116-B, B.D.A, Duplex House
Baramunda
Bhubaneswar-751 003
Orissa. Phone:450 534
DELHI
Flat No. 415, 4 th Floor
Pratap Bhawan
5, Bahadurshah Zafar Marg
New Delhi-110 002.
Phone: 2270199
MUMBAI
Nav Bhavna Co-op. Society Ltd.
IInd Floor, D-20
Near Siddhi Vinayakar Temple
Veer Savarkar Marg, Prabhadevi
Mumbai-400 025
Phone: 4370118, 4373251



# भवतां हस्तं हस्तेन गृहीत्वा ...

''हे चन्दमामे, कुत्र अस्ति भवती ?'' इति एतं प्रश्नं बहवः उच्चस्वरेण पृष्टवन्तः, केचन च मनसि एव पृष्टवन्तः, ताम् एतां प्रियपत्रिकाम् आपणेषु अप्राप्नुवन्तः, पत्रवितारकस्य स्यूततः अलभमानाः वा ।

भवतः सर्वान् प्राप्तुं चन्दमामया कृताः प्रयत्नाः अनल्पाः । यथा भवन्तः तस्याः विरहतः सन्तप्ताः, तथा सा अपि तप्ता भवतां वियोगात् ।

नवेम्बर्मासस्य चतुर्दशे दिनाङ्के बालदिनत्वेन ख्याते जवाहरलालनेहरूवर्यस्य जन्मदिने चन्दमामा भवतां करकमलं विभूषयिष्यति यत् तत् तु महते सन्तोषाय खलु ?

यत् भवति तत् शुभोदर्काय एव । भवताम् अस्माकं च वियोगः परस्परप्रीतेः अभिवर्धकः जातः । चन्दमामा एतत् सविनयम् अङ्गीकरोति यत् भवताम् अनुरोधः, भवद्भिः प्रकाशिता समुत्सुकता चैव तस्याः पुनःप्रकाशनस्य वास्तविकः हेतुः इति ।

चन्दमामा प्रेम्णा, समर्पितचित्तेन, सर्जनात्मकतया च भवतां सेवां कर्तुम् इच्छति । नवं शतकं यथा आत्मानं स्वयं प्रकाशयत् अस्ति तथैव चन्दमामा अपि नवसम्पत्तेः प्रकाशनम् अनुवर्तयति । भाविवैशिष्ट्यानां विषये एतस्याम् एव सञ्चिकायां प्रकाशितं विवरणं पश्यन्तु भवन्तः ।

भवतां हस्तं हस्तेन गृहीत्वा चन्दमामा नवे शतके, नवे सहस्रमाने च पदं स्थापयन्ती सर्वेषां शुभम् आशंसति ।



# कटाक्षेण प्रपञ्च-वीक्षणम्



## *प्रपञ्चस्य अतिविशाल-प्रजाप्रभुत्वोपेतदेशः*

भारतेन राष्ट्रियनिर्वाचनम् अतिक्रान्तम् अस्ति । स्वातन्त्र्यप्राप्त्यनन्तरं प्रवर्तमानं त्रयोदशं निर्वाचनम् एतत् । वयम् अभिनन्दामः प्रधानमन्त्रिणं, तस्य मन्त्रिमण्डलं, सांसदान् च, किन्तु न कदापि भारतीयप्रजाः !

निर्वाचनं नूतनं लोकसभां निर्माति । लोकसभा राज्यसभा च अस्माकं प्रजा-प्रभुत्वस्य द्वौ पक्षौ । सकृत् आरब्धा लोकसभा पञ्चवर्षाणि यावत् प्रवर्तेत इति तु नियमः । तदनुगुणम् एतावता अस्माभिः दशमं निर्वाचनं सम्मुखीकरणीयम् आसीत् । वयम् यत् इदानीं त्रयोदशं निर्वाचनं सम्मुखीकृतवन्तः, तस्य कारणं - कासाञ्चित् लोकसभानाम् अवधेः समाप्तितः पूर्वम् एव परिसमाप्तिः । तादृश्याः परिसमाप्तेः कारणं तु सर्वकाररचनार्थं यावती सांसदसंख्या कस्यचित् एकस्य पक्षस्य अपेक्ष्यते तावती संख्या जनैः न प्रदत्ता । अतः द्वित्राः बहवः वा पक्षाः सम्भूय सर्वकारं रचितवन्तः । केचन पक्षाः सर्वकाररचनायां भागम् अवहन्तः बाह्यसमर्थनं घोषितवन्तः । अन्ततो गत्वा परस्परावगतेः अभावतः सर्वकारः पतितः ।

भारतेन १९४७ तमे वर्षे स्वातन्त्र्यं प्राप्तम् । किन्तु तेन तदर्थं सुमहत् मूल्यं प्रदत्तम् । सहस्रशः लक्षशः च जनाः मतीयकलहस्य कारणतः प्राणैः वियुक्ताः अभवन् । भारतस्य कश्चन भागः 'पाकिस्थान'नाम्ना पृथग्भूतः जातः । भारतेन पाकिस्थानेन च

## जर्मन्साहित्यक्षेत्रस्य मणिः

साहित्यक्षेत्रीया १९९९ तमवर्षीया नोबेल्प्रशस्तिः प्राप्ता अस्ति जर्मन्देशीयेन कृतिकारेण गुन्तर्-ग्रास्वर्येण, यश्च डाञ्झिग्नगरे १९२७ तमे वर्षे जातः । गतेषु त्रिंशद्वर्षेषु जर्मन्देशे सुमहान्तं प्रभावं जनितवान् अस्ति ग्रास्वर्यः ।

तदीयासु सुप्रसिद्धासु कृतिषु अन्यतमा अस्ति '*दि टिन् ड्रम्*' । एतस्यां कृतौ कृतिकारः समाजं कुब्जस्य दृष्ट्या पश्यति । कुब्जः आस्करः कृतिकारस्य जन्मभूमौ डाञ्झिग्नगरे एव जातः । आस्करस्य बुद्धिमत्ता, भावनाः, अवगमनशक्तिः च सामान्यबालकेषु यथा तथैव प्रवृद्धाः, तथापि सः बालकः इव दृश्यते स्म ।

सः बालकः इव अयःपटहेन क्रीडति स्म । हिट्लरस्य नाझीशासनस्य उन्नत्यवनत्यनुगुणं सोऽपि वर्धते स्म ।

द्वितीयं जागतिकयुद्धं १९४५ तमे वर्षे यदा समाप्तं तदा आस्करस्य अवयवाः अपि सहजतया प्रवृद्धाः । किन्तु अचिरात् एव एतत् वर्धनं

प्रजाप्रभुत्वपद्धतिः अङ्गीकृता । बहुभिः परिवीक्षकैः चिन्तितं यत् उभयोः अपि देशयोः एकत्रापि प्रजाप्रभुत्वं न स्थास्यति इति । तेषां निरीक्षा पाकिस्थानविषये अवितथा जाता । स्वातन्त्र्यानन्तरं दीर्घकालं यावत् पाकिस्थानं सैन्यस्य सर्वाधिकारिणः वा अधीनम् आसीत् । किन्तु भारतं तु विशालप्रजाप्रभुत्वोपेतदेशः सन् व्यराजत । यदि अस्माकं प्रजाभिः प्रजाप्रति-निधिभिश्च गाम्भीर्येण गौरवोपेतरीत्या च व्यवहृतं स्यात् तर्हि आर्थिके, शैक्षणिके, तान्त्रिके च क्षेत्रे भारतेन सुमहती प्रगतिः साधिता अभविष्यत् । एशियन् डेवलपमेण्ट ब्यांक् वदति यत् भारते यदि सुस्थिराः सर्वकाराः सर्वदा अभविष्यन् तर्हि स च देशः २००० तमे वर्षे एशियाखण्डे एव आर्थिकवृद्धिक्षेत्रे प्रथमः अभविष्यत् इति । भारतस्य जनाः, अधिकारिणः, प्रजाप्रतिनिधयः च यदि दृढदेशभक्तिमन्तः स्युः तर्हि प्रगतिः कुतो वा न सिद्ध्येत ? अतः अद्य अपेक्ष्यते सर्वेषु देशभक्तेः उद्रेकः ।



स्थगितम् । प्रायः एतत् आस्करस्य मनसि स्थितां मानवीयाशां, यां च सः अक्षिसात् कर्तुं न शक्तवान् तां, सङ्केतयति । कारागारे इव कस्याञ्चित् संस्थायां बन्धने स्थितः आस्करः विमुक्तः भवति । किन्तु अग्रे किं करणीयम्, कः मार्गः अनुसरणीयः इति सः न जानाति ।


गुन्तर् ग्रास्

अतः सः स्वकीयं पटहं वादयितुम् उद्युक्तः भवति । ध्वनिः यं दिशं नयति सा दिक् अनुसरणीया इति सः निश्चिनोति ।

ग्रास्वर्यस्य अपरा प्रसिद्धकृतिः *'दि फ्लेण्डर्'* । शिलायुगोत्तरकालिकीं विकासस्थितिम् अस्मान् ज्ञापयन्ती आरब्धा एषा कृतिः अस्मत्कालं स्मारयन्ती समाप्तिं गच्छति ।

कृतिकारः धीवरस्य दृष्ट्या विनोदशैल्या परिवीक्ष्यते । परिलुठतः आगतस्य मीनस्य साहाय्येन धीवरः बुद्धिमत्तमः भवति । पाकविषये प्रभुत्वं नवपद्धतिं च अधिकृत्य स्त्रीपुरुषयोः मध्ये यः सङ्घर्षः भवति ततः उत्पन्नायाः क्रान्तेः महापरिणामान् अधिकृत्य ग्रन्थः प्रवर्तते ।

ग्रास्वर्यः अनेकवारं भारतम् आगतवान् आसीत् । कलकत्तानगरे सः नाटकस्य कस्यचित् निर्देशनम् अपि कृतवान् आसीत् ।

साहित्यक्षेत्रे नोबेल्पारितोषिकं प्राप्तवत्सु जर्मनीयेषु ग्रास्वर्यः षष्ठः । ततः पूर्वतनाः तावत् - थियोडर् मामसन् (१९०२), रुडाल्फ् यूकन् (१९०८), पौल् वोन् हेव्स् (१९१०), गोहार्ड् हुपमन् (१९१२), थामस् मन् (१९२९), हेन्रिक् बोल् (१९७२) च ।



# CHANDAMAMA
# चन्दमामा

मान्याः वाचकाः, पोषकाः, अभिमानिनः च,

अहम् एतत् पत्रम् आनन्दविषादाभ्यां शबलितेन भावेन लिखन् अस्मि । चन्दमामायाः पुनःप्रकाशने वयं समर्थाः जाताः इत्यतः सन्तोषः । अस्माकं विषादः तु - वर्षाधिककालं यावत् वयं भवतां खेदहेतवः जाताः इत्यतः ।

कीदृश्यः सत्त्वपरीक्षाः अनिरीक्षिततया समापतिताः, कैः कष्टतरङ्गैः सवेगम् अभिपत्य प्रकाशनकर्मणि विघ्नः उत्पादितः इत्यादीनां विवरणेन भवतां मनः सन्तापयितुम् अहं न इच्छामि । एतत् तु सत्यं यत् परमपूज्यायाः भगवत्याः अनुग्रहतः एव वयं कष्टपरम्परागर्ततः बहिः आगताः, न तु मानवमात्र-प्रयत्नात् । भवताम् एषा प्रीतिपात्रभूता पत्रिका पुनरपि भवतां करकमलेषु विलसति यत् तदेव खलु प्रमाणयति अस्मद्विषये स्थितं भगवत्याः अनुग्रहम् ? भारतीयाः बालाः प्रादेशिकं भाषागतं च भेदं विस्मृत्य बह्वीभिः मातृभाषाभिः, आंग्लभाषया, संस्कृतेन च प्रकाश्यमानं कथासाहित्यं सानन्दं सोत्साहं च पठितुम् अवकाशं यथा प्राप्नुयुः तथा कर्तुम् उद्यतानाम् अस्माकम् आशयस्य उदात्तता भगवत्या एव अनुग्रहद्वारा प्रमाणीकृता अस्ति । अतः तस्यै दिव्यशक्त्यै एषोऽयं मम प्रणामाञ्जलिः ।

मानवप्रपञ्चे दिव्यशक्तेः अनुग्रहः सुपुत्राणां साधनीकरणद्वारा प्रकाशितः भवति । चन्दमामाविषये तादृशविशिष्टसाधनताम् अवाप्तवान् अस्ति श्रीविनोदसेथीवर्यः । सः चन्दमामायाः आराधकः सन् सर्जनशीलप्रवृत्त्या तां निरन्तरं प्रोत्साहितवान् । अहं तं सानन्दम् अभिनन्दामि । सुदृढं च विश्वसिमि यत् बालसाहित्येतिहासे तस्य सर्जनात्मकप्रतिभा अपूर्वां सिद्धिं दर्शयिष्यति इति ।

अहं तान् अपि असंख्यान् अभिमानिनः कृतज्ञतापूर्वकं स्मरामि, ये च चन्दमामायाः पुनःप्रकाशने औत्सुक्यम् अनुरोधं च प्रदर्शितवन्तः । तेषां सदिच्छा एव अस्माकम् अपूर्वं रिक्थम् ।

चन्दमामा न केवलं विषयवैविध्येन, गुणविशेषेण, चित्रवैशिष्ट्येन च, अपि तु सुरुचिरया उत्कटशोभया अपि उपेता सती प्रकाशिता भविष्यति । आधुनिकतन्त्रज्ञानस्य उपायनभूतैः सान्द्रमुद्रिकादिरूपैः अपि सा आत्मानं दर्शयिष्यति । तस्याः अन्यानि रूपवैविध्यानि अग्रे काले काले ज्ञापयिष्यामः वयम् । चन्दमामायाः प्रकाशने योऽयम् अनूह्यः विघ्नः सञ्जातः, यश्च आवर्षाधिककालम् अबाधत च, तदर्थं प्रकाशनसंस्थायाः निर्वाहकमण्डल्याः प्रतिनिधित्वेन अहं भवतां क्षमां याचे । एतादृशी अप्रिया स्थितिः चन्दमामायाः जीवने इतःपरं पुनरपि यथा न उद्भवेत् तथा कर्तुम् अहं मम सहकारिणः सर्वे च सम्पूर्णप्रयत्नं करिष्यामः इति आश्वास्य, पुनरपि भवतां क्षमां संयाच्य विरमामि विस्तरात् ।

इति भवदीयः

B. Viswanatha Reddy

(बि. विश्वनाथरेड्डी)

*प्रकाशकः*

# प्रधानमन्त्रित्वेन तृतीयवारं चितः श्रीमन् वाजपेयी

श्री अटलबिहारीवाजपेयिवर्यः गते अक्टोबर्मासस्य १३ दिनाङ्के तृतीयवारं प्रधान-मन्त्रित्वेन शपथग्रहणं कृतवान्। सः १९९६ तमवर्षस्य मे-मासे शपथग्रहणं कृत्वा १३ दिनानि यावत् प्रधानमन्त्रिपदे आसीत्। ततः अष्टादशपक्षाणां सहकारेण सः १९९८ तमे वर्षे मार्च्मासे पुनरपि तत् पदं प्राप्तवान्। दौर्भाग्यवशात् त्रयोदशमासाभ्यन्तरे तस्य सर्वकारः अन्त्यम् अगात्। ततः देशेन त्रयोदशं निर्वाचनं सम्मुखीकृतम्। तत्र विजयं प्राप्तवान् वाजपेयिवर्यः अग्रे त्रयोदशवर्षाणि यावत् देशस्य परिपालनं कुर्यात् इति भाति।

एतदवसरे तदीयः पक्षः, भारतीयजनतापक्षः, त्रयोविंशतिपक्षाणां सहकारेण शासनं करोति। स्थिरसर्वकारः रचनीयः चेत् भा.ज.पक्षस्य सहकारः अपरिहार्यः इति मत्त्वा राष्ट्रियप्रजाप्रभुत्वसंयुतिः (एन्.डि.ए.) रचिता। एतेन संयुतपक्षेण उत्तमं बहुमतम् एव प्राप्तम्। तन्नाम उपत्रिशतस्थानानि प्राप्तानि। (स्थानानि आहत्य ५४०) प्रमुखः प्रतिपक्षः भारतीयराष्ट्रियकांग्रेस्संस्था (ऐ.एन्.सि.) दशाधिकपक्षाणां सहकारं प्राप्य अपि १३५ स्थानेषु जयं प्राप्तुम् अशक्नोत्।

प्रायः ऐदम्प्राथम्येन संयुतिसर्वकारपरम्परा १९९८ तमे वर्षे आरब्धा। श्री वाजपेयी, तत्सदृशाः अन्ये च संयुतेः परिरक्षणार्थं वर्षं यावत् विशेषप्रयासं कृतवन्तः। किन्तु सहकारिभूताः पक्षाः विविधैः कारणैः संयुतेः परित्यागं कृतवन्तः। ततः देशेन अपरं निर्वाचनं सम्मुखीकृतम्। किन्तु एतस्मिन् द्वादशमासात्मके अवधौ वाजपेयिवर्येण यत् कार्यं कृतं तस्य परिणामतः देशस्य अधिकांशाः जनाः अपेक्षितवन्तः यत् सः प्रधानमन्त्रित्वेन निर्वाचितः भवेत् इति।

वाजपेयिवर्यः तारुण्ये विद्यार्थिक्षेत्रे कार्यं करोति स्म। ततः सः श्यामप्रसादमुखर्जिवर्येण (१९५१ तमे वर्षे) संस्थापितं जनसङ्घं प्रविष्टवान्। १९५७ तमे वर्षे प्रवृत्ते निर्वाचने जयं प्राप्तवत्सु चतुर्षु जनसङ्घीयेषु वाजपेयिवर्यः अन्यतमः आसीत्। १९६२ तमे वर्षे सः विजयी न जातः। किन्तु अनन्तरं चतुर्वारं सः ग्वालियर्क्षेत्रे विजयं प्राप्तवान्। १९८४ तमे वर्षे एतस्मात् क्षेत्रात् सः निर्वाचितः न जातः। १९८९ तमे वर्षे सः लखनऊ-विदिशाक्षेत्रयोः निर्वाचितः अभवत्। ततः त्रिवारं सः लखनऊक्षेत्रे विजयी अभवत्। तथैव एतस्मिन् वर्षे अपि।

१९९७ तमे वर्षे मुरार्जीदेसायिवर्यः तं मन्त्रिमण्डले सहभागस्वीकारार्थं निमन्त्रितवान्। एतस्मिन् अवसरे वाजपेयिवर्येण अपूर्वा कर्तृत्वशक्तिः दर्शिता। १९७१ तमवर्षस्य युद्धस्य अनन्तरं भारतपाकिस्थानदेशौ उद्यतायुधौ आस्ताम्। तयोः मैत्रीसंवर्धनार्थं विशेषप्रयासः कृतः वाजपेयिवर्येण। विश्वसंस्थायाः सामान्याधिवेशने हिन्दीभाषया भाषणं कुर्वता तेन विशेषविक्रमः साधितः अपि।

अस्माकं प्रधानमन्त्री, वयम् इव चलच्चित्रदर्शने, हाकी-पादकन्दुकादिक्रीडने चापि आसक्तः। सः मार्जारशुनकादिषु विशेषप्रीतिमान्। यदि समयः प्राप्येत तर्हि सः शयनात् पूर्वं पञ्चतन्त्रकथाः पठितुम् उद्युक्तः भवति। तस्य नेतृत्वेन शोभमानः भारतदेशः परमवैभवस्थितिं प्राप्नुयात् इति आशास्महे वयम्।





# पितृभक्तिः

सुन्दरः कश्चन अनुक्तग्राही आसीत् । सः स्वस्य अभिप्रायानुसारमेव कार्याणि करोति स्म, न तु ज्येष्ठानां वचनानुसारम् । एतेन कारणेन सुन्दरस्य पितुः पुरन्दरस्य बहु दुःखं भवति स्म ।

पुरन्दरः बुद्धिमान् उत्तमः च आसीत् । परन्तु सः अपि अनुक्तग्राही एव । अतः एव सः गुणः पुत्रे अपि अस्ति इति जनाः वदन्ति स्म ।

''यद्यपि अहम् अनुक्तग्राही, तथापि अहं सम्प्रदायानुयायी अस्मि । मयि पितृभक्तिः अधिका अस्ति । अद्यतनस्य मम सुखजीवनस्य कारणं पितृभक्तिः एव अस्ति । मम एतम् अनुभवं पुत्रः ज्ञास्यति चेत् पर्याप्तम् । ततः सः महान्तं लाभं प्राप्नुयात्'' इति वदति स्म पुरन्दरः ।

सुन्दरः अन्येषाम् अनुभवात् विवेकं प्राप्तुं न इच्छति स्म । सर्वम् अपि स्वानुभवात् एव ज्ञातुम् इच्छति स्म सः । बाल्यकाले 'अग्निः दहति' इति एतं विषयम् अन्येषां मुखात् श्रुत्वा न विश्वसितवान् आसीत् सः । स्वयं स्पृष्ट्वा एव ज्ञातवान् आसीत् । तारुण्ये ग्रामस्य कूपे मकरः अस्ति इति विषयं श्रुत्वा स्वयं कूपे अवतीर्य तीर्त्वा आगतवान् आसीत् । अदृष्टवशात् सः मकरात् रक्षितः आसीत् ।

परन्तु सुन्दरस्य एतेन गुणेन कश्चन लाभः अपि जातः आसीत् । तस्मिन् ग्रामे शान्ता नाम काचित् विधवा स्त्री एकस्मिन् महति गृहे वसति स्म । सा यदा मृता तदा तस्याः बन्धुः तस्य गृहस्य विक्रयणं कर्तुम् इष्टवान् । किन्तु तस्मिन् गृहे सीता पिशाचीरूपेण वसति इति किंवदन्ती आसीत् । यद्यपि सः बन्धुः न्यूनमूल्येन एव तत् गृहं विक्रेतुं सिद्धः आसीत्, तथापि तस्य क्रेतारः केऽपि न लब्धाः आसन् । सुन्दरः

'सुभद्रा'

तत् गृहं क्रेतुम् इष्टवान् आसीत् । परन्तु पिता न अङ्गीकृतवान् आसीत् । अतः सुन्दरः तस्मिन् गृहे रात्रित्रयम् एकाकितया एव वासं कृत्वा तस्मिन् गृहे काऽपि पिशाची नास्ति इति निरूपितवान् आसीत् । तदा पुरन्दरः तत् गृहं क्रीतवान् आसीत् ।

पुत्रस्य कारणेन लाभः जातः इति पुरन्दरस्य महान् सन्तोषः जातः आसीत् । परन्तु तदनन्तरदिनेषु सुन्दरः पितुः वचनम् किञ्चित् अपि न श्रुतवान् आसीत् ।

पुरन्दरस्य दश-एकर्-परिमितं क्षेत्रम् आसीत् । तत्र पुरन्दरः एव उत्तमरीत्या कृषिं करोति स्म । तां भूमिं पुत्राय दत्त्वा तेन क्रियमाणं क्षेत्रवर्धनं द्रष्टव्यम् इति पुरन्दरस्य इच्छा आसीत् ।



परन्तु सुन्दरस्य चिन्तनम् एव भिन्नम् आसीत् । 'कृषिक्षेत्रे यद्यपि परिश्रमः क्रियते, तथापि महान् लाभः तु ततः न प्राप्यते । यदि वाणिज्यं क्रियते तर्हि एकवर्षाभ्यन्तरे एव प्रभूतं धनं सम्पाद्य वैभवपूर्णजीवनं यापयितुं शक्यते' इति चिन्तयन् सुन्दरः कदाचित् पितरम् उद्दिश्य - ''किञ्चित् क्षेत्रं विक्रीय वाणिज्यार्थं यदि मूलधनं भवान् दास्यति तर्हि वाणिज्यस्य आरम्भं करिष्यामि'' इति उक्तवान् ।

तदा पुरन्दरः - ''पुत्र ! वाणिज्यम् अस्माकं वंशस्य वृत्तिः न । नीतिन्यायादि-विषये अस्माकं विश्वासः अस्ति । वाणिज्ये वञ्चनम् अनिवार्यम् । बहुवारम् असत्य-कथनमपि अनिवार्यं भवति तत्र । तत् विना तत्र प्रगतिः न भविष्यति । भवान् कृषिकार्यमेव यदि करिष्यति तर्हि मम अनुभवस्य साहाय्यम् अपि स्वीकर्तुं शक्यते'' इति हितवचनानि उक्तवान् ।

पितुः वचनं श्रुत्वा सुन्दरः हसन् - ''यदि आवश्यकता भविष्यति तर्हि वाणिज्य-सूक्ष्माणि सर्वाणि अहं ज्ञास्यामि । वाणिज्ये प्रगतिनिमित्तं सर्वम् अपि कर्तुं सिद्धः अस्मि । भवतः अनुभवस्य आवश्यकता तु मम नास्ति । यदि कृषिकार्यम् एव करिष्यामि तर्हि अपि अहं भवतः अनुभवस्य उपयोगं न करिष्यामि । वाणिज्यक्षेत्रे तु भवतः अनुभवः नास्ति एव । अतः एतस्य चिन्तनमेव त्यजतु'' इति उक्तवान् ।

सुन्दरस्य माता सीता अपि पुत्रस्य वचनम् गर्वेण एव प्रोत्साहितवती । 'मम वचने एतस्य किञ्चित् अपि श्रद्धा नास्ति



किल ?' इति चिन्तयन् खेदं प्राप्तवान् पुरन्दरः । क्षेत्रविक्रयणविषये पुरन्दरस्य अङ्गीकारः सुतरां न आसीत् । पञ्च-एकर्-परिमितं क्षेत्रं कुत्रचित् क्रेतव्यम् इति मत्वा यत् धनं स्थापितम् आसीत् तत् एव धनं पुत्राय दत्त्वा - ''भवतः इच्छानुसारम् एतस्य उपयोगं करोतु'' इति उक्तवान् पुरन्दरः।

ततः सुन्दरः वाणिज्यम् आरब्धवान् । आदौ उत्तमलाभः अपि तेन प्राप्तः । परन्तु तस्य रक्षणार्थं तेन असत्यकथनं, नीतिरहितं वञ्चनायुक्त-व्यवहारादिकं च करणीयम् आपतितम् । किन्तु तेन कारणेन वर्षाभ्यन्तरे एव सः प्रभूतं लाभं प्राप्तवान् आसीत् ।

एतेन सन्तुष्टः पुरन्दरः - ''भवान् वाणिज्ये नितरां समर्थः अस्ति । भवान् असमर्थः इति मया चिन्तितम् आसीत् । यदि भवान् इच्छति तर्हि समग्रम् अपि क्षेत्रं विक्रीय वाणिज्यवर्धनं करोतु । अहम् अपि भवतः वाणिज्ये अंशभागी भवितुम् इच्छामि'' इति उक्तवान् ।

एतत् वचनं श्रुत्वा सुन्दरः कुपितः जातः । सः पितरम् उद्दिश्य - ''भवान् नीतिन्यायादिविषयेषु केवलं वदति । परन्तु वस्तुतः धनम् एव प्रमुखम् अस्ति भवतः दृष्ट्या । अनीति-वञ्चनादयः यद्यपि धनम् आनयन्ति, तथापि सन्तोषं न जनयन्ति इति अनुभवेन ज्ञातवान् अस्मि । इतोऽपि वर्षं यावत् वाणिज्यं करिष्यामि । यदि तदा अपि लाभं प्राप्तुं शक्ष्यामि तर्हि अग्रे नेष्यामि । अन्यथा कृषेः एव आरम्भं करिष्यामि । तावत्पर्यन्तं कमपि मम अंशभागिरूपेण न स्वीकरोमि'' इति निश्चयस्वरेण उक्तवान् ।

''मम वचनं किञ्चित् अपि न शृणोति एव एषः । एतस्मिन् पितृभक्तिः एव नास्ति'' इति खेदेन पत्नीम् उक्तवान् पुरन्दरः ।

पुनः एकवर्षाभ्यन्तरे सुन्दरः वाणिज्ये महतीं हानिम् अनुभूतवान् । अतः सः वाणिज्यं परित्यज्य कृषिकार्यम् एव आरब्धुम् इष्टवान् ।

एतेन पुरन्दरस्य सन्तोषः एव जातः । परन्तु सुन्दरः पित्रा अनुसृतां पद्धतिम् अनुसर्तुं न इष्टवान् । ''यस्मिन् क्षेत्रे व्रीहिः अस्ति तत्र तमाखोः आम्रस्य च वाटिका निर्मातव्या । नारिकेलस्य सस्यानि अपि वर्धनीयानि'' इति पितरं सूचितवान् सः ।

''विद्यमानवाटिकायाः नाशः किमर्थं करणीयः ? अन्यत् क्षेत्रम् एव क्रीत्वा तत्र भवदिच्छानुसारं कृषिं कर्तुं शक्यते'' इति

उक्तवान् पिता । तत् सुन्दरः न अङ्गीकृतवान् ।

"एवम् एव चेत् अस्माकं सर्वनाशः भविष्यति" इति पत्नीम् उक्तवान् पुरन्दरः ।

तदा पत्नी खेदरहितस्वरेण - "अस्माकं ललाटलिप्यनुगुणं सर्वं भविष्यति । परन्तु भवान् पुत्रस्य मनसि खेदं न जनयतु" इति उक्तवती ।

पत्न्याः वचनं पुरन्दरः न इष्टवान् । सः पुनः पुनः पुत्रं हितवचनानि वक्तुं व्यर्थप्रयत्नं कृतवान् । ततः किमपि फलम् अप्राप्नुवन् सः अन्ते उक्तवान् - "यावत् अहं जीवामि तावत् मम इच्छानुसारम् एव मम क्षेत्रे कार्यं भवेत् । यदि आवश्यकं तर्हि भवान् स्वसन्तोषार्थम् अन्यत् क्षेत्रं क्रीत्वा तत्र यथा इच्छति तथा कृषिं करोतु" इति उक्तवान् ।

सुन्दरः अपि तदर्थं सिद्धः एव आसीत् । तस्मिन् ग्रामे चेन्नकेशवः नाम कश्चन प्रसिद्धः कृषिकः आसीत् । तस्य शत-एकर्-परिमितं क्षेत्रम् आसीत् । तस्य एकमात्रपुत्री पद्मा सुन्दरस्य व्यक्तित्वात् आकृष्टा आसीत् । "सुन्दरम् एव वृणोमि" इति दृढस्वरेण वदति स्म सा । चेन्नकेशवः सुन्दरं - "यदि भवान् मम पुत्रीं परिणेष्यति तर्हि भवते दश-एकर्-परिमितं क्षेत्रं दास्यामि । तत्र भवान् यत् इच्छति तत् वर्धयितुं शक्नोति" इति उक्तवान् आसीत् ।

सम्बन्धः उत्तमः एव आसीत् । परन्तु तत्र कश्चन क्लेशः अपि आसीत् । चेन्नकेशवः पुरन्दरः च वैरिणौ आस्ताम् । परस्परसम्भाषणं परस्परमुखदर्शनं वा न कुरुतः स्म तौ । अतः चेन्नकेशवः - "भवान् यदि मम पुत्रीं वृणोति तर्हि मातापितृभ्यां सह वासं कर्तुं न अर्हति । अन्यस्मिन् एव गृहे भवता सपत्नीकेन वासः करणीयः" इति उक्तवान् आसीत् ।





यदा पिता 'अन्यत् क्षेत्रं क्रीत्वा कृषिं करोतु' इति उक्तवान् तदा सुन्दरः चेन्नकेशवस्य पुत्र्याः विषयं, चेन्नकेशवेन सूचितान् नियमान् च मातापितरौ उक्तवान् ।

'पुत्र सपत्नीकः अन्यत्र वासं करिष्यति' इति वार्ता एव आघातकरी आसीत् सीतायाः दृष्ट्या । ''पुत्रस्य मनसि आगतं विचारं परिवर्तयितुं न शक्यते'' इति स्पष्टं जानाति स्म सीता । किन्तु पुत्रवियोगम् अपि सोढुं न शक्नोति स्म सा । ''इदानीं किं करणीयम्'' इति बहुधा चिन्तितवती सा दूरबन्धुं गोविन्दं स्मृतवती । तस्मिन् एव दिने गोविन्दस्य गृहं गत्वा स्वस्य समस्यां निवेदितवती चापि ।

एषः गोविन्दः दूरसम्बन्धेन एतस्याः अग्रजः एव आसीत् । तस्य समीपे एकं विशिष्टमूलकम् अस्ति इति किंवदन्ती श्रूयते स्म । तस्य प्रभावेण यस्य कस्यापि मनसः परिवर्तनं कर्तुं सः शक्तः आसीत् । तदर्थं जनैः दिनद्वयं यावत् तस्य समीपं गन्तव्यं भवति स्म । द्वितीयवारं यदा गम्यते स्म तदा एव व्यक्तौ प्रभावः भवति स्म ।

सीतायाः मुखात् सर्वं श्रुत्वा गोविन्दः उक्तवान् - ''यत् कृतं तत् भोक्तव्यम् इति ज्येष्ठाः उक्तवन्तः सन्ति । भवती एकमात्र-पुत्र्याः विवाहं कृत्वा कीदृशमार्गदर्शनं कृतवती ? पृथक् गृहं करणीयम् इति खलु ? ततः पुत्र्याः श्वश्रूश्वशुरौ नितरां खिन्नौ । तयोः शापस्य फलम् एतत् । प्रथमं भवती उत्तमभावनया पुत्र्याः मार्गदर्शनं करोतु । तेन भवत्याः कुटुम्बस्य हितं साधितं भविष्यति'' इति उक्तवान् ।

''एतस्मिन् विषये सम्भाषितुम् अहम् अत्र न आगता । 'सुन्दरे पितृभक्तिः लेशमात्रेण अपि नास्ति । तस्मिन् पितृभक्तिः जागरिता यथा भवेत् तथा करोतु' इति प्रार्थयितुम् आगता अस्मि'' इति विषयपरिवर्तनं कुर्वती उक्तवती सीता ।

''अस्तु ! तदर्थं योग्यं प्रयत्नम् अहं करिष्यामि । परन्तु यावत् पुत्र्याः विषये भवत्याः भावनाः परिवर्तिताः न भवन्ति तावत् पुत्रस्य विषये भवत्याः इच्छानुसारं किमपि न भविष्यति । एतत् स्मरतु'' इति उक्तवान् गोविन्दः ।

''पुत्र्याः विषयस्य प्रस्तावः इदानीं सर्वथा अनुचितः । पुत्रे परिवर्तनम् आनेतव्यं चेत् पुत्र्याः विषये मम भावनाः

परिवर्तनीयाः इत्येव नास्ति । मम पुत्रः दिनद्वयं भवत्समीपम् आगमिष्यति चेत् सिध्यति खलु कार्यम् ? द्वितीये दिने भवतः मूलिका तस्मिन् परिवर्तनं जनयिष्यति एव । प्रथमदिने अहं कथञ्चित् तं भवत्समीपं प्रेषयिष्यामि । भवान् तस्य पुरतः तदीयं पितरं सम्यक् निन्दतु । ततः अनन्तरदिने तस्य उपस्थितिः भवत्समीपे अवश्यं भविष्यति'' इति उक्तवती सीता ।

''यद्यपि मया प्रयत्नः करिष्यते तथापि तस्य बुद्ध्यनुसारमेव सर्वं प्रचलिष्यति । मम प्रयत्नं तु अहं करिष्यामि एव । भवती गत्वा आगच्छतु'' इति उक्तवान् गोविन्दः ।

सुन्दरस्य माता गृहं गत्वा प्रवृत्तं पतिम् उक्त्वा - ''भवान् चिन्तां त्यजतु । सर्वम् अपि सम्यक् भविष्यति'' इति उक्तवती ।

''एतावत्पर्यन्तं यद्यपि तस्मिन् पितृभक्तिः न दृष्टा, तथापि अधिकां चिन्तां न प्राप्तवती आसीत् भवती । सः एव मत्तः बुद्धिमान् इति चिन्तनम् आसीत् भवत्याः । इदानीं सः गृहतः दूरं गच्छन् अस्ति इति कारणतः भवती गभीरचिन्तनं कुर्वती अस्ति इति भाति'' इति पत्नीं दृष्ट्वा उपहसितवान् पुरन्दरः ।

''किं मम उपहासेन ? पुत्रः अस्मत्तः दूरं यथा न गच्छेत् तथा करणं कथम् इति खलु प्रकृतचिन्तनम् ? तद्विषये भवता किं वा कृतम् ? अहम् एव अग्रजं स्मृत्वा तत्समीपं गत्वा आगतवती । तथा करणीयम् इति भवतः मनसि तु न आगतम् । अलं चर्चया । समस्या उभयोः अपि समाना । अतः अग्रे किं करणीयम् इति चिन्तयाम



तावत्'' इति उक्तवती सीता ।

ततः तौ दम्पती परस्परं समालोचनं कृत्वा पुत्रम् आहूय - ''भवता पृष्टम् अस्माभिः कदापि न तिरस्कृतम् । विवाहस्य विषये अपि अस्माभिः अन्यथा न उच्यते । अतः आवयोः एकं वचनं पालनीयं भवता । अद्य भवता स्वस्य मातुलस्य गोविन्दस्य गृहं गत्वा आशीर्वादं प्राप्य आगन्तव्यम् । ततः सर्वं सम्यक् भविष्यति'' इति प्रीत्या उक्तवन्तौ ।

सुन्दरः पित्रोः वचनानुसारं गोविन्दस्य समीपं गतवान् । गोविन्दः सुन्दरात् सर्वान् विषयान् ज्ञात्वा - ''भवतः माता सत्सम्प्रदायादिकं न जानाति । पुत्र्याः दुर्बोधनं कृतवती अस्ति सा । तादृशी सा स्नुषां कदापि सम्यक् न द्रक्ष्यति । अतः

पृथक् गृहं करणीयम् इति यत् भवान् चिन्तयन् अस्ति तत् सुष्ठु एव । भवतः पिता कीदृशः इति तु ग्रामे सर्वे जानन्ति एव । तादृशस्य पितुः समीपे स्थित्वा अपि भवान् एतावान् उत्तमः अस्ति इति तु महतः सन्तोषस्य विषयः । भवादृशस्य पुत्रस्य सेवां प्राप्तुं भवतः पिता योग्यः न इति कारणतः एव भगवान् भवता एतादृशं निर्णयं स्वीकारितवान् अस्ति'' इति वदन् पुरन्दरं बहुधा निन्दितवान् ।

तदा सुन्दरः असहनया - ''एतत् सर्वं भवान् मां किमर्थं वदति ? भवतः आशीर्वादं प्राप्तुं मातापितरौ माम् अत्र प्रेषितवन्तौ स्तः'' इति उक्तवान् ।

''भवतः पिता उत्तमकालम् अपि ज्ञातुं न शक्नोति इति भाति । इदनीम् अशुभकालः अस्ति । श्वः प्रातः सुमुहूर्तः अस्ति । अतः तदा आगच्छतु । आशीर्वादं कृत्वा प्रेषयिष्यामि'' इति उक्तवान् गोविन्दः ।

सुन्दरः ततः कोपेन गृहं प्रत्यागतवान् । प्रवृत्तं सर्वं मातापितरौ उक्त्वा - ''मयि आत्मविश्वासः अस्ति । अतः मम बुद्ध्यनुसारं सर्वं करोमि । मयि मातापित्रोः विषये महती भक्तिः अपि अस्ति । तयोः निन्दनम् अहं कदापि न सहे । यः मम मातापित्रोः निन्दनं करोति तस्य आशीर्वादं प्राप्तुम् अहं न इच्छामि । पुनः मातुलगृहं गच्छतु इति भवद्भिः कदापि न वक्तव्यम् । तावदेव न, भवद्भिः तेन सह सम्भाषणमपि न करणीयम्'' इति कोपेन उक्तवान् ।

तदा पुरन्दरः - ''पुत्रे पितृभक्तिः अस्ति'' इति वस्तुस्थितिं ज्ञातवान् । 'मम पुत्रस्य आत्मनि अधिकविश्वासः । अतः सः अन्यस्य वचनस्य पालनं सर्वथा न इच्छति । अतः एव मम वचनम् अपि तिरस्करोति सः । किन्तु तस्मिन् स्थिता पितृभक्तिः तु श्लाघ्या एव' इति चिन्तितवान् सः ।

अन्ते गोविन्दस्य मार्गदर्शनानुसारं पुरन्दरः तस्य पत्नी च दुरभिमानं न्यूनीकृत्य सद्व्यवहारे मनः कृतवन्तौ । तस्मात् तयोः पुत्र्याः जीवनं सुन्दरं जातम् । पुरन्दर-चेन्नकेशवयोः सम्बन्धः अपि उत्तमः जातः । एतस्मात् सुन्दरे स्थिता पितृभक्तिः अधिका जाता । सुप्तरूपेण स्थिता सा व्यक्ततां गता अपि । तस्मात् पुरन्दरः अन्ये च महान्तं सन्तोषं प्राप्तवन्तः ।





# सम्राट् अशोकः

## १४

*(बिन्दुसारस्य मरणानन्तरम् अशोकः सुषेणप्रभृतीन् अन्तःशत्रून् संहृतवान् । ज्येष्ठानाम् अपेक्षानुसारं द्वितीयवारं परिणयं प्राप्य पट्टाभिषिक्तः सन् मगधाधिपतिः जातः । मन्त्रिसेनाधिपतीनां प्रोत्साहकवचनानुसारं कलिङ्गम् उद्दिश्य जैत्रयात्रां कर्तुं सः सिद्धः जातः । ''प्रथमपत्नी विदिशादेवी उज्जयिनीतः राजधानीं पाटलीपुत्रं प्रति आनेतव्या'' इति एषा अशोकस्य अपेक्षा सफला न जाता । कलिङ्गस्य उपरि मगधसैन्यं युद्धार्थम् आगच्छत् अस्ति इति ज्ञातवन्तः कलिङ्गस्य राज्यपालकाः प्रजाः च शत्रुसैन्यं सम्मुखीकर्तुं सिद्धाः जाताः । अनन्तरम् ...)*

सेनाधिपतेः उपस्थितौ महाराजस्य अशोकस्य वसतिं प्रविष्टवान् यशः - ''वयं विद्युद्वेगेन आक्रमणं कृतवन्तः । तथापि कलिङ्गजनाः दृढचित्तेन परिस्थितेः निर्वहणं कुर्वन्तः सन्ति । एतत् आश्चर्यं जनयति अस्मासु'' इति उक्तवान् ।

''सद्यः तस्मिन् राज्ये राजा नास्ति । तस्य अधीनराजाः राजप्रतिनिधित्वेन सर्वान् राज्यव्यवहारान् पश्यन्तः सन्ति । एवं स्थिते कलिङ्गस्य जये कः क्लेशः ?'' इति पृष्टवान् अशोकः ।

सेनाधिपतिः किमपि अवदन् मौनम् आश्रितवान् ।

तदा यशः एव धैर्येण उक्तवान् - ''महाराज ! शत्रूणां स्तुतिः भवतः असन्तोषाय स्यात् । तथापि वदामि । कलिङ्गस्य सामान्यजनानाम् अपि धैर्य-साहस-देशप्रेमादयः नितरां स्तुत्याः सन्ति ।



तेषां धैर्यादिकं दृष्ट्वा वयम् आश्चर्येण मूकाः भवामः'' इति ।

''मम अपि अनुभवः एषः एव । अस्मान् सम्मुखीकृतवन्तः एते ग्रामीणाः जनाः सामान्याः एव । सामान्यतः कृषिकार्यं कुर्वन्तः जीवनं यापयन्ति एते । तथापि आपत्काले देशरक्षणार्थं सर्वदा सिद्धाः भवन्ति । एषः सम्प्रदायः आ प्राचीन-कालात् अत्र प्रचलितः अस्ति । कलिङ्गस्य सैनिकान् सर्वे अत्यन्तम् आदरपूर्वकदृष्ट्या पश्यन्ति'' इति उक्तवान् सेनाधिपतिः ।

''अत्र एकैकः सामान्यः जनः अपि राज्यार्थं प्राणत्यागं कर्तुं सर्वदा सिद्धः इति श्रुतवान् । एतत् सत्यं किम् ?'' इति पृष्टवान् अशोकः ।

''महाप्रभो ! सत्यम् एतत्'' इति उक्तवान् सेनाधिपतिः ।

''महाबलशालिनः मगधस्य सैनिकान् कलिङ्गस्य सामान्यजनाः कृषिकाः स्वधैर्यसाहसादिभिः पराजेतुं शक्नुवन्ति खलु ? पश्यन्तु मम दौर्भाग्यम् । प्रथमजैत्रयात्रायाम् एव मम एतादृशी दयनीया परिस्थितिः जाता । यद्यपि अहं न पराजितः, तथापि महान् आशाभङ्गः तु जातः मम'' इति खेदमिश्रितेन कोपमिश्रितेन च स्वरेण उक्तवान् अशोकः ।

किञ्चित्समयं यावत् तत्र विषाद-भरितमौनम् आवृत्तम् आसीत् । एतत् सोढुम् अशक्नुवन् यशः खड्गम् आकृष्य - ''यावत् मम एतस्मिन् शरीरे प्राणाः भवन्ति तावत् तादृशी परिस्थितिः कदापि न आपतति महाराज'' इति अशोकम् उक्तवान् । ततः सेनाधिपतिं पश्यन् - ''पुरतः ये ये लभ्यन्ते सर्वान् मारयन्तु इति दलपतीन् सैनिकान् च आज्ञापयतु । प्रतिपक्षीयाः युद्धसन्नद्धाः भवन्तु इति अस्माभिः निरीक्षा करणीया नास्ति । कथञ्चित् अत्यधिकान् जनान् मारयन्तु । तेषां संख्याबलं न्यूनं भवति चेत् एव कलिङ्गं जेतुं शक्यते'' इति उक्तवान् उद्रिक्तस्वरेण ।

तावता राज्ञः वसतेः पुरतः उद्घोषणस्य शब्दः श्रुतः । प्रमुखवार्तां राजानं निवेदयितुं सैनिकाः आगताः इत्यस्य सूचना सा ।

खड्गं हस्तेन गृह्णन् एव वसतेः बहिः गतः यशः तत्र विद्यमानं दलपतिम् एकम् अन्तः नीतवान् ।

''दुर्गस्य अन्तः युद्धं भीकररीत्या

प्रचलत् अस्ति महाराज । अस्माकं पञ्चसहस्त्रं सैनिकाः मृताः । ततोऽपि अधिकजनाः कलिङ्गपक्षीयाः मृताः । परन्तु आश्चर्यकरः विषयः नाम एतावत्पर्यन्तं ये युद्धं कृतवन्तः ते शिक्षितसैनिकाः न । सुशिक्षिताः सैनिकाः दुर्गस्य अन्तः एव सन्ति'' इति उक्तवान् दलपतिः ।

''आदौ सामान्यानां द्वारा अस्माकं सैन्यस्य बलं न्यूनीकृत्य अनन्तरं सुशिक्षित-सैनिकानां द्वारा आक्रमणं कारणीयम् इति तैः निश्चितम् इति भाति । अवगतं मया तेषां युद्धकौशलम्'' इत्युक्त्वा अशोकः - ''इतःपरं विलम्बः न करणीयः यश ! वयम् एव मगधसैन्यस्य नायकत्वनिर्वहणं कुर्मः । आगच्छतु तावत्'' इति आज्ञापितवान् ।

सर्वे अपि वसतेः बहिः आगतवन्तः ।

* * *

युद्धभूमेः पार्श्वे एकस्मिन् ग्रामे सहस्त्रशः कलिङ्गस्य महिलाः दिने पाकादिकं कृत्वा रात्रौ सैनिकेभ्यः तत् यच्छन्ति स्म । न केवलं तावत् व्रणितानां वैद्यचिकित्साम् अपि कर्मकराणां द्वारा कारयन्ति स्म । एषा वार्ता मगधपक्षीयैः ज्ञाता । अनुक्षणं सेनाधिपतिः सैनिकान् स्वीकृत्य तं ग्रामं गत्वा समग्रं ग्रामं दग्धवान् ।

तथापि दृढचित्ताः ताः महिलाः दह्यमानात् गृहात् निर्भयेन काष्ठादिकं स्वीकृत्य निन्दन्त्यः सैनिकानाम् उपरि आक्रमणं कृतवत्यः । परन्तु ताः सर्वाः अपि सैनिकैः अल्पकाले एव निर्दयं मारिताः ।

तस्मिन् दिने दुर्गस्य समीपे एव



भीकरयुद्धं प्राचलत् । पक्षद्वये अपि सहस्त्रशः जनाः मृताः । परेद्यवि यशः अशोकस्य समीपम् आगत्य नमस्कृत्य - ''महाराज ! एका शुभवार्ता । कलिङ्गदुर्गस्य एकस्मिन् पार्श्वे दृढा भित्तिः छिद्रा जाता अस्ति । तस्मात् रन्ध्रात् साहसिनः सैनिकान् प्रेषयित्वा तान् सूचितवान् अस्मि यत् तत्रत्याः अधिकारिणः मारणीयाः इति । प्रमुखाः अधिकारिणः म्रियन्ते चेत् दुर्गम् अस्मद्वशं भविष्यति । तदा अस्माकं जैत्रयात्रा विजययात्रारूपेण परिवृत्ता भविष्यति'' इति उक्तवान् ।

''मित्र ! सन्तोषकरीं वार्ताम् उक्तवान् भवान्'' इति वदन् अशोकः यशम् आलिङ्ग्य - ''दुर्गस्य उपरि उन्नतस्थले



स्थित्वा 'मगधसाम्राज्यस्य अङ्गभूतस्य कलिङ्गराज्यस्य कृते मम मित्रं यशं राजप्रतिनिधिरूपेण अत्र नियोजयन् अस्मि' इति प्रकटयितुं यः सुमुहूर्तः आवश्यकः तस्य प्राप्यर्थम् अहम् अत्यन्तम् उत्सुकः अस्मि'' इति अत्यानन्देन उक्तवान् । यशः सन्तोषेण हसितवान् ।

यशस्य आज्ञानुसारम् एव मगध-सेनाधिपतिः दुर्गस्य अन्तः विद्यमानस्य अधिकारिप्रकोष्ठस्य उपरि आक्रमणं कृतवान् । प्रकोष्ठस्य अन्तः आहत्य एकविंशतिः जनाः आसन् । तेषु केचन वृद्धाः आसन् अपि । तथापि ते शत्रुभिः सह वीरोचितरीत्या युद्धं कृत्वा वीरमरणं प्राप्तवन्तः ।

दुर्गं निष्कण्टकं जातम् इति ज्ञात्वा अशोकः यशः च दुर्गं प्राप्तवन्तौ । मध्ये मार्गं रक्तस्य धारायां लुठन् कश्चन वृद्धः अशोकं दृष्ट्वा - ''भवन्तः अस्मान् मारितवन्तः इति तु सत्यम् एव । परन्तु अस्माकम् आत्मशक्तिम्, आवेशं च भवन्तः मारयितुं न शक्नुवन्ति । सः आवेशः, भवद्विषयकः क्रोधः च जन्मसु अतीतेषु अपि न म्रियते । भवन्तः अस्मान्, निरायुधाः अस्माकं महिलाः च मारितवन्तः । तथैव भवन्तः, निरायुधाः भवतां महिलाः चापि अस्माभिः अपि मारणीयाः सन्ति । तावत्पर्यन्तम् अस्माकम् आवेशः न्यूनः न भविष्यति'' इति खेदेन उक्तवान् ।

'निरायुधाः भवतां महिलाः कैः मारिताः ?'' इति पृष्ठतः पश्यन् पृष्टवान् अशोकः ।

परन्तु उत्तरदानात् पूर्वम् एव वृद्धस्य शरीरात् प्राणाः निर्गताः आसन् ।

''अन्ते जगत्प्रसिद्धं तोशालीदुर्गम् अस्मद्वशं जातम्'' इति उक्तवान् यशः ।

''सत्यम् । दुर्गम् अस्मद्वशं जातम् । परन्तु दुर्गे मनुष्याः एव न सन्ति खलु ?'' इति आश्चर्येण उक्तवान् अशोकः ।

''राजप्रतिनिधिषु यः कोऽपि प्राणसहितं यदि स्यात् तर्हि अस्माभिः एतत् दुर्गं प्रवेष्टुं शक्यं न अभविष्यत् । दुर्गे विद्यमानेषु केचन मृताः । पुनः केचन व्रणिताः । अन्ये केचन बलात् गृहीताः । तादृशान् दयानदीतीरं प्रति वयं प्रेषितवन्तः'' इति उक्तवान् यशः ।

''तर्हि अस्माभिः वशीकृतं दुर्गं

जनरहितम् इति मन्ये'' इति उक्तवान् अशोकः ।

''यद्यपि एतत् जनरहितं, तथापि अत्र प्रभूतं धनं, निगूढः निधिः च अस्ति । तत् कलिङ्गदेशस्य वणिग्भिः बहुकालेभ्यः अन्यदेशेषु कृतेन वाणिज्योद्यमेन प्राप्तम् । इतः परं कलिङ्गस्य नौकाः समुद्रे न सञ्चरन्ति खलु ?'' इति उक्तवान् यशः ।

''कलिङ्गस्य वणिजः वाणिज्यं स्थगयन्ति चेत् तेन अस्माकं किं प्रयोजनम् ? ते अपि अस्माकं राज्यस्य भागिनः भूत्वा पूर्ववत् अन्यदेशैः सह वाणिज्यं कर्तुं शक्नुवन्ति खलु ?'' इति उक्तवान् अशोकः ।

''वाणिज्यस्य अनुवर्तनं ते अङ्गीकुर्युः । परन्तु भवताम् अधीनाः सन्तः न, अपि तु स्वतन्त्रराज्यस्य प्रजाः सन्तः'' इति ध्वनिः पृष्ठभागतः श्रुतः ।

कुतः एतत् श्रूयते इति परिशीलयन् मुखं परिवृत्य दृष्टवान् अशोकः । आशरीरं व्रणितः श्वासोच्छ्वासार्थम् अपि कष्टम् अनुभवन् कश्चन कलिङ्गदेशीयः मण्डलाधिकारी तेन दृष्टः ।

''भवान् इतोऽपि जीवन् अस्ति किम् ?'' इति पृच्छन् अशोकस्य पृष्ठतः आगच्छन् दलपतिः तं खड्गेन मारितवान् । सः गतप्राणः जातः ।

''सहसा अनावश्यकरीत्या किमर्थं भवान् तं मारितवान् ?'' इति किञ्चित् कोपेन पृष्टवान् अशोकः ।

''प्रभो ! भवतः उपस्थितौ अल्पा अपि अजागरूकता न करणीया एव । सः तावता



धैर्येण सम्भाषणं कुर्वन् अस्ति इत्यतः ऊह्यते यत् यदा कदापि सः स्वसमीपे विद्यमानम् आयुधं भवन्तं लक्षीकृत्य क्षिपेत्'' इति वदन् दलपतिना कृतस्य कार्यस्य समर्थनं कृतवान् सेनाधिपतिः ।

''तथापि महाराजस्य उपस्थितौ तस्य अनुमतिं विना किमपि न करणीयम् इति तु भवता ज्ञातम् एव खलु ?'' इति उक्तवान् यशः ।

''प्रभो ! क्षम्यताम् । प्रभोः क्षेमं मनसि निधाय एव तादृशं कार्यं कृतं मया'' इति उक्तवान् दलपतिः ।

अशोकः यशम् उद्दिश्य - ''एतादृश-कष्टपरिस्थितयः अस्मान् अपथे प्रवर्तयेयुः इति भीतिः मम'' इति खेदेन उक्तवान् । अनन्तरं सः सेनाधिपतिं पश्यन् -



''अस्माकं सैनिकाः निरायुधाः महिलाः मारितवन्तः इति श्रुतम् । सत्यं किम् एतत् ?'' इति पृष्टवान् ।

सेनाधिपतिः शिरः अवनमय्य भूम्यभिमुखः सन् स्थितवान् ।

''किमर्थं मौनम् आश्रितम् ? सत्यं वदतु तावत्'' इति उच्चस्वरेण उक्तवान् अशोकः ।

''ताः निरायुधाः आसन् इति तु सत्यम् । परन्तु ताः शत्रुसैनिकानां कृते आवश्यकम् आहारादिकं प्रापयन्त्यः तेषां शुश्रूषादिकं कुर्वत्यः च आसन् । अस्माकं सैनिकानाम् अपेक्षया ताः शिक्षिताः श्रमजीविन्यः च आसन् । कलिङ्गसैनिकानाम् आत्मस्थैर्यं न्यूनीकर्तुं तासां मारणं विना अन्यः मार्गः न आसीत्'' इति उक्तवान् सेनाधिपतिः ।

''तासां वासस्थानं कुत्र'' ? इति पृष्टवान् अशोकः ।

''राज्यस्य नानास्थलेभ्यः आगताः ताः सर्वाः अत्र समीपस्थे ग्रामे वसन्त्यः आसन्'' इति उक्तवान् सेनाधिपतिः ।

''भवान् मां तत्र नयतु'' इति उक्त्वा अशोकः ततः प्रस्थितः ।

यशः सेनाधिपतिः च तम् अनुसृतवन्तौ । दुर्गात् बहिः विद्यमानः उपसेनाधिपतिः राजानं नमस्कृत्य - ''प्रभो ! कलिङ्गपक्षीयाः लक्षाधिकाः जनाः मृताः सन्ति । ततोऽप्यधिकजनाः अस्माभिः बद्धाः सन्ति । युद्धं सामान्यतया समाप्तप्रायम्'' इति उक्तवान् ।

अशोकः मौनेन शिरः अवनमय्य अश्वारोहणं कृतवान् । यशः सेनाधिपतिः च तम् अनुसृतवन्तौ ।

अङ्गरक्षकैः सह प्रस्थितः अशोकः तस्य ग्रामस्य समीपम् आगतः । ग्रामं परितः शृगालगृध्रादयः शवान् खादन्तः आसन् । तत्रस्थं शोकमयदृश्यं तत्रत्यं मौनं च अशोकस्य खेदम् अवर्धयत् ।

''यश ! एतावता कलिङ्गं जितं खलु ? इतःपरम् अत्र भवान् एव राज्यपालकः भवतु । अहं .....'' एवं यावत् अशोकः वदन् आसीत् तावता एकस्याः महिलायाः हासध्वनिः श्रुतः । अनुक्षणमेव यशः वक्षःस्थलं गृह्णन् अश्वात् अधः पतितवान् । तस्य वक्षःस्थले एकः बाणः लग्नः असीत् ।

अशोकः सेनाधिपतिः च झटिति अश्वात् अवतीर्णवन्तौ । ''अनुक्षणं तां महिलां

गृह्णन्तु'' इति सैनिकान् आज्ञापितवान् सेनाधिपतिः ।

''मम अन्वेषणं करणीयं नास्ति । अहम् अत्रैव अस्मि'' इति वदन्ती काचित् सुन्दरी स्त्री तत्र प्रत्यक्षा जाता । दलपतिः तां गृहीतवान् ।

भूमौ पतितवतः मित्रस्य समीपं गतवान् अशोकः । यशः किमपि वक्तुं प्रयत्नं करोति स्म । परन्तु असफलः भवति स्म । क्षणं यावत् दिग्भ्रान्तः अशोकः अनन्तरं समाधानेन स्थित्वा तां युवतिं पश्यन् ''कीदृशं घोरकार्यं कृतवती भवती !'' इति उक्तवान् ।

''कलिङ्गं कोऽपि जेतुं न शक्नोति इति निरूपितम् अस्ति मया । तावदेव न, भवान् अत्र शासननिर्वहणार्थं कस्यचित् नियुक्तिं कर्तुम् अपि न शक्नोति इति अपि प्रत्यक्षरूपेण निरूपितम् अस्ति मया । अधिकारदाहेन युक्तः यः कोऽपि अस्यां भूमौ पादं स्थापयति चेत् तस्य एषा एव गतिः भविष्यति'' इति दृढस्वरेण उक्तवती सा युवतिः ।

''प्रभो ! अक्षम्यम् एतत् । एतां दुष्टां मारयितुम् अनुमतिं ददातु'' इति उक्तवान् दलपतिः ।

''मास्तु दलपतिवर्य ! सा यदि इष्टवती स्यात् तर्हि इतोऽपि अधिकां हानिं कर्तुम् अशक्ष्यत् । मां लक्ष्यीकृत्य प्रयुक्तं बाणं यदि सा महाराजं लक्ष्यीकृत्य प्रयुक्तवती स्यात् तर्हि अस्माकं जैत्रयात्रा विफला अभविष्यत् । अतः तस्याः बन्धनं न कुर्वन्तु । तां त्यजन्तु'' इति उक्त्वा अग्रे वक्तुम् अशक्तः यशः मौनम् आश्रितवान् ।

तावता केनचित् सैनिकेन जलम् आनीतम् । तत् जलं पाययितुं प्रयत्नं कृतवान् अशोकः । परन्तु यशः तावता गतप्राणः जातः आसीत् ।

तत्र सर्वत्र गभीरमौनं प्रसृतम् । मित्रस्य अन्तिमवाक्यानि एव स्मरन् तस्य भौतिकशरीरस्य पार्श्वे उपविष्टवान् अशोकः । ''यदि सा बाणप्रयोगसमये लक्ष्यपरिवर्तनं कृतवती स्यात् तर्हि जैत्रयात्रा निष्प्रयोजिका अभविष्यत् । सत्यम् । परन्तु एतेन जयेन वा किं साधितम् ?'' इति चिन्तनम् आरब्धवान् सः ।

*(समाप्तिः अग्रिमसञ्चिकायाम्)*





# लुण्टाकः भैरवः

स्वीकृतं कार्यं परित्यक्तुम् अनिच्छन् दृढव्रती त्रिविक्रमः पुनः अपि यथापूर्वं वृक्षस्य समीपं गत्वा वृक्षस्य उपरि विद्यमानं शवम् अवतार्य स्कन्धे आरोप्य श्मशानाभिमुखं प्रस्थितवान् ।

तदा शवान्तर्गतः वेतालः उक्तवान् - "हे राजन् ! अस्मिन् मध्यरात्रसमये भयानके अस्मिन् श्मशाने अत्यन्तं पारश्राम्यतः भवतः मनोबलं दृष्ट्वा आश्चर्यमेव अनुभवामि अहम् । तस्य कारणं प्रायः भवता प्रजापालने अनुस्त्रियमाणः दोषरहितः धर्मः स्यात् । किन्तु कदाचित् केचन दीर्घकालं यावत् अनुसृतस्य अपि न्याय-नियमस्य, दण्डनीतेः च विरुद्धं निर्णयं स्वीकुर्वन्ति तात्कालिकस्य मनोदौर्बल्यस्य कारणेन । तस्य उदाहरणत्वेन लुण्टाकस्य भैरवस्य कथां वदामि । मार्गश्रमपरिहाराय तां शृण्वन् गच्छतु" इति ।

# वेतालकथा



अनन्तरं वेतालः कथाम् आरब्धवान् -

पूर्वं मन्दारदेशं मणिध्वजः नाम राजा पालयति स्म । सः विवेकी, धैर्यवान्, पराक्रमी च आसीत् । न्यायपालने सः अत्यन्तं कठोरः आसीत् । चौर्यं कृतवतः हस्तौ एव कर्तयति स्म सः । लुण्टाकस्य तु निश्चयेन मरणदण्डनं भवति स्म । तथापि तस्य राज्ये लुण्टाकानां बाधा तु न्यूना न जाता ।

मन्दारदेशस्य, प्रतिवेशिनः सौवीरदेशस्य च मध्ये एकं गहनं वनम् आसीत् । तस्मिन् वने विद्यमानैः लुण्टाकैः प्रजाः पीडिताः भवन्ति स्म । मणिध्वजस्य सैनिकाः बहुवारं तेषां लुण्टाकानां ग्रहणस्य प्रयत्नं कृत्वा विफलाः जाताः आसन् । तस्य कारणम् अपि आसीत् यत् वने निलीय स्थातुं लुण्टाकानां बहूनि रहस्यस्थानानि आसन् ।

तस्मिन् वने भैरवनामकः एकः महालुण्टाकः आसीत् । बाल्ये एव तस्य पिता दिवङ्गतः इति कारणेन अल्पे एव वयसि सः लुण्टाकानां गणस्य प्रमुखः जातः आसीत् । मार्गे गच्छतः धनिकान् अवरुध्य सः विना परिश्रमं लुण्ठनं करोति स्म । धनिकाः तेन मार्गेण गच्छन्तः सन्ति इति वार्ता यदा ज्ञायते स्म तदा सः अनुचरैः सह गत्वा युक्ते समये तान् आक्रम्य लुण्ठनं करोति स्म ।

कदाचित् भैरवस्य अनुचराः कञ्चित् संन्यासिनं कपटवेषधारिणं राज्ञः गूढचारं भावयित्वा बद्ध्वा भैरवस्य समीपम् आनीतवन्तः । सः वस्तुतः संन्यासी एव इति विषयः यदा ज्ञातः तदा 'एतं वनात् बहिः प्रेषयित्वा आगच्छन्तु' इति अनुचरान् आज्ञापितवान् भैरवः ।

किन्तु संन्यासी ततः अगच्छन् भैरवम् उक्तवान् - "वत्स ! अहं केनचित् उद्देशेन एव एतत् गहनम् अरण्यं प्रविष्टवान् अस्मि । अहं काञ्चित् योगसाधनां कुर्वन् अस्मि । तत्र एकाग्रता अत्यन्तम् आवश्यकी । यदा अहं ध्याने भवामि तदा केनापि मया सह सम्भाषणं न करणीयम् । किन्तु अद्यपर्यन्तम् अहं यत्र यत्र ध्यानार्थं उपविष्टवान् तत्र सर्वत्र अपि केनचित् पथिकेन, वनवासिना वा मम तपोभङ्गः क्रियते स्म । ते आगत्य किमपि पृच्छन्ति स्म एव । अतः किञ्चित्कालं यावत् ध्यानार्थं भवतः अस्यां वसतौ वासं कर्तुम् अवसरं ददातु" इति ।

संन्यासिनः प्रार्थनाम् अङ्गीकुर्वन् भैरवः तस्मै आवश्यिकाः व्यवस्थाः कल्पयित्वा स्वयं तस्य योगक्षेमं दृष्टवान् । संन्यासिनः तपः निर्विघ्नं प्राचलत् ।

एकस्मिन् दिने संन्यासी भैरवम् आहूय - ''भोः ! अधुना घर्मकालः आरब्धः अस्ति । अतः अहं हिमालयं गमिष्यामि । यद्यपि जनानां पीडनम् एव भवतः वृत्तिः, तथापि भवान् मम सेवां बहु समीचीनतया कृतवान् यत् तेन अहं नितरां सन्तुष्टः अस्मि । अन्येषां सम्पदः अपहरणं पापकरम् इति भवान् जानाति एव । जीवननिर्वहणाय तु अनेके उत्तमाः मार्गाः सन्ति । अतः भवान् एतं हीनमार्गं परित्यजतु'' इति बोधितवान् ।



तदा भैरवः - ''श्रीमन् ! पापपुण्यादि-विषये मादृशाः किं वा जानन्ति ? मम प्रपितामहस्य कालतः अपि अस्माकं वृत्तिः एषा एव । ते किमर्थं लुण्टाकाः अभवन् इति तु अहं न जानामि । अपि च खड्गविद्यां विना अन्यां कामपि विद्याम् अहं न जानामि । यदि अहम् एतत् कार्यं त्यजेयं तर्हि महाराजः मह्यं किमपि कार्यं दद्यात् वा ? निश्चयेन न । बद्धानां चोराणां कृते कठिनदण्डस्य दानात् ऋते अस्माकं महाराजः किं वा जानाति ?'' इति दीर्घं निःश्वस्य उक्तवान् ।

भैरवे परिवर्तनम् आनेतुम् अशक्तः संन्यासी अन्ते - ''भोः, यत् योग्यम् इति अभासत तत् अहं भवन्तम् उक्तवान् । इतःपरं भवान् यथा इच्छति तथा करोतु । भवान् बहु श्रद्धया मम सेवां कृतवान् । तदर्थं प्रत्युपकारं कर्तुम् इच्छामि अहम् । मया ज्ञातं कश्चित् मन्त्रं भवन्तम् उपदिशामि । यदा भवान् तं जपति तदा अनुक्षणमेव भवान् एकः शिशुः भविष्यति । तदा पुनः भवतः नूतनजीवनस्य आरम्भः भविष्यति । किन्तु कदापि भवान् भैरवत्वेन पुनः परिवर्तितः न भविष्यति । एतं सम्यक् स्मरतु । आवश्यकतायां सत्याम् एव एतं जपतु'' इति उक्त्वा भैरवं तं मन्त्रम् उपदिष्टवान् ।

एवं सति कदाचित् सौवीरदेशे धनस्य आवश्यकता उत्पन्ना । मन्दारदेशस्य राजा मणिध्वजः शूरैः सैनिकैः युक्तेन दलपतिना सह धनं प्रेषितवान् । किन्तु तत् धनं सौवीरदेशेन न प्राप्तम् एव । सैनिकानां दलपतेः च का गतिः जाता इति वार्ता अपि



न ज्ञाता । अतः 'वने विद्यमानैः लुण्टाकैः एव किमपि कृतम् अस्ति' इति निश्चितवान् मणिध्वजः । अतः सः स्वयं महत्या सेनया सह गत्वा वने विद्यमानं लुण्टाकानां रहस्य-स्थानम् आक्रान्तवान् । तदा भैरवः बद्धः । महाराजः सभायां तस्य विचारणं यदा कृतवान् तदा सः उक्तवान् यत् 'दलपतेः सैनिकानां च विषये अहं किमपि न जानामि' इति । किन्तु 'अहं लुण्टाकः न' इति सः न उक्तवान् ।

मणिध्वजः यद्यपि भैरवस्य वचने विश्वसितवान्, तथापि भैरवः लुण्टाकः आसीत् इति कारणेन तस्य मरणदण्डनं तु विहितवान् एव । राजाज्ञानुसारं दण्डनं सप्ताहाभ्यन्तरे दातव्यम् आसीत् । अतः भैरवः भटैः कारागृहे स्थापितः । भैरवः स्वदुःस्थितेः कारणेन चिन्ताक्रान्तः अभवत् । तदा संन्यासिना उपदिष्टः मन्त्रः तेन स्मृतः ।

अनन्तरदिने रक्षकभटः प्रातः आगत्य कारागृहस्य द्वारम् उद्घाट्य यथापूर्वम् अन्तः गतवान् । सुप्तवतः भैरवस्य उत्थापनाय यदा सः आच्छादकम् आकृष्टवान् तदा तत्र एकः शिशुः तेन दृष्टः । अनुक्षणं जागरितः शिशुः रोदनम् आरब्धवान् । तदा दिग्भ्रान्तः सः भटः अन्यान् जनान् अधिकारिणं च आहूतवान् । द्वारं तु यथापूर्वं कीलितम् आसीत् । पलायनाय कोऽपि अन्यः मार्गः न आसीत् । अधिकारी किञ्चित् धैर्येण तं शिशुम् उन्नीय परीक्षितवान् । तस्य शिशोः दक्षिणकपोले क्षतस्य चिह्नम् आसीत् । तदा अधिकारी स्मृतवान् यत् भैरवस्य दक्षिणकपोले अपि क्षतस्य चिह्नम् आसीत् इति । तस्मिन् शिशौ भैरवस्य सादृश्यम् अपि तेन लक्षितम् ।

अतः भैरवः एव शिशुरूपेण परिवृत्तः अस्ति इति तु ज्ञातम् । किन्तु शिशोः कथं वा मरणदण्डः दातव्यः इति तेषां चिन्ता आरब्धा । अधिकरी समस्यां परिहर्तुं न शक्तः । अतः सः शिशुना सह राजसभां गत्वा प्रवृत्तं सर्वं मणिध्वजं निवेदितवान् । तदा मणिध्वजः सभायाः अभिप्रायं पृष्टवान् ।

तदा सभायाम् उपविष्टः वणिक्प्रमुखः प्रमोदगुप्तः उत्थाय - ''महाराज ! शिशोः रूपेण विद्यमानः एषः वस्तुतः भैरवः एव । दुर्भेद्यत्वेन ख्यातात् अस्माकं देशस्य कारागृहात् अद्यपर्यन्तं केनापि पलायनं कर्तुं

न शक्तम् । कस्याचित् मन्त्रस्य साहाय्येन शिशुरूपं धृतवान् भैरवः दण्डात् मुक्तः भवितुम् इच्छति । प्रायः अनन्तरं सः पुनः भैरवत्वेन परिवर्तितः भवेत् । भवान् तु भैरवस्य एव मरणदण्डनं विहितवान् अस्ति। अतः शिशुरूपी भैरवः अपि दण्डनीयः एव। शिशुः इति यदि परित्यज्यते तर्हि अग्रे अपि एवमेव मन्त्रतन्त्राणां साहाय्येन अपराधिनः पलायनं कुर्युः । अतः एतस्मै दण्डः दातव्यः एव'' इति उक्तवान् ।

पश्चात् मणिध्वजः किञ्चित्कालं चिन्तनं कृत्वा - ''एषः शिशुः न दण्डार्हः । अतः एतं मम अन्तःपुरे एव पालयिष्यामि'' इति निर्णयं श्रावितवान् ।

एवं कथां समापितवान् वेतालः - ''भोः राजन् ! मणिध्वजस्य न्यायनिर्णयविषये मम अनेके सन्देहाः सन्ति । शिशुरूपेण विद्यमानः भैरवः एव इति सर्वे अङ्गीकृतवन्तः । यदि सः रूपं परिवर्तयेत् तर्हि दण्डमुक्तः कथं वा भवेत् ? अपि च अन्तःपुरे तस्य शिशोः पोषणेन लुण्टाकाय राजमान्यता दत्ता न भवति किम् ? शिशौ करुणायाः प्रदर्शनं महाराजस्य दण्डनीतेः विस्मरणं स्मारयति खलु ? मम प्रश्नानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति उक्तवान् ।

तदा त्रिविक्रमः - ''मणिध्वजस्य न्यायनिर्णयः योग्यः एव अस्ति । शिशुरूपी भैरवः तु निरपराधी एव । राज्ञा दलपतिना सह प्रेषितं धनं तु कुत्रापि न लब्धम् । अतः भैरवः वस्तुतः दण्डार्हः न आसीत् । अपि च यदा भैरवः शिशुः अभवत् तदा आरभ्य एव सः स्वस्य पापजीवनाय तिलोदकं दत्त्वा नूतनं जीवनम् आरब्धवान् अस्ति । संन्यासिनः मन्त्रोपदेशस्य प्रधानं लक्ष्यम् आसीत् यत् भैरवस्य सन्मार्गनयनम् । शिशुरूपप्राप्तिः नाम पुनर्जन्म एव । तस्य पूर्वजन्मनः स्मरणं न भवति । एतैः सर्वैः कारणैः मणिध्वजस्य निर्णयः न्यायसम्मतः एव इत्यत्र नास्ति तिलमात्रेणापि सन्देहः'' इति उक्तवान् ।

एवं राज्ञः मौनभङ्गः यदा जातः तदा वेतालः शवेन सह अदृश्यः सन् पुनश्च वृक्षम् आरूढवान् ।





# पितुः बहुमानम्

पवनपुरनामके ग्रामे वेङ्कटेशः नाम कृषीवलः आसीत् । तस्य पुत्रः रङ्गनाथः । सः बहु श्रद्धया कृषिं कुर्वन् आसीत् । एकस्मिन् वर्षे वेङ्कटेशस्य केदारे माषधान्यस्य फलोदयः समृद्धः अभवत् । सस्येभ्यः धान्यानि पृथक्कृत्य गोणीषु पूरयित्वा तासां रक्षणार्थम् एकं भटं नियोजितवान् वेङ्कटेशः । धान्यं विक्रेतुम् इष्टवान् सः उत्तमस्य मूल्यस्य प्रतीक्षां कुर्वन् आसीत् । सप्ताहस्य अनन्तरं यदा सः गोणीनां गणनां कृतवान् तदा ज्ञातवान् यत् माषधान्ययुक्तं गोणीद्वयं न्यूनम् अस्ति इति । ''कथम् एतत् अभवत् ?'' इति वेङ्कटेशः भटं पृष्टवान् ।

''कथम् अभवत् इति अहं न जानामि । परन्तु अहम् आरात्रि जागरूकतया एव आसम्'' इति भटः उक्तवान् । भटे विश्वासः अनुचितः इति मत्वा वेङ्कटेशः स्वपुत्रं रङ्गनाथम् एव रक्षणकार्ये नियुक्तवान् । तस्यां रात्रौ अपि एका धान्यगोणी अदृश्या जाता । 'इदानीमपि रक्षणव्यवस्था सम्यक् न जाता' इति चिन्तितवान् वेङ्कटेशः ।

'इतः परं किं करणीयम्' इति यदा सः चिन्तनं कुर्वन् आसीत् तदा ईश्वरः नाम तस्य बन्धोः सेवकः कश्चित् कस्यचित् कार्यस्य निमित्तं वेङ्कटेशस्य गृहम् आगतवान् । ईश्वरः विश्वासार्हः सेवकः इत्येतं विषयं वेङ्कटेशः सम्यक् जानाति स्म ।

ईश्वरस्य आगमनकारणं ज्ञात्वा वेङ्कटेशः उक्तवान् - ''ईश्वर ! भवतः स्वामिनः कार्यम् इदानीम् एव करणीयम् इति तु नास्ति । अतः भवान् कतिपयदिनानि अत्र एव स्थित्वा धान्यगोणीनां चोरस्य अन्वेषणे साहाय्यं करोतु'' इति । ईश्वरः स्वसम्मतिं सूचितवान् ।

तद्रात्रौ धान्यरक्षणार्थम् ईश्वरः नियुक्तः ।

तथापि अपरस्मिन् प्रातःकाले धान्यगोणीषु एका गोणी न दृश्यते स्म । आश्चर्यम् अनुभवन् वेङ्कटेशः ईश्वरं पृष्टवान् - ''किं भोः ! अद्यापि चौर्यम् अभवत् खलु ? अत्र गोणीनां समीपे स्थितानि पादचिह्नानि पश्यामः चेत् ज्ञायते यत् एकः एव चोरः खलम् आगत्य धान्यम् अपहृतवान् इति । परन्तु एतावन्तं भारम् एकः एव उन्नेतुं न शक्नोति । अतः स्पष्टं यत् भवान् एव तस्य साहाय्यं कृतवान् इति । युक्तं खलु मम वचनम् ?'' इति ।

''अहं कस्यापि साहाय्यं न कृतवान्'' इति उक्तवान् ईश्वरः । तथापि वेङ्कटेशः तस्मिन् वचने न विश्वसितवान् ।

तदा खिन्नः ईश्वरः - ''अहो ! अहं साहाय्यं न कृतवान् इति बहुधा वदामि चेदपि भवान् मयि न विश्वसिति खलु ?'' इति वदन् अनतिदूरे वृषभयोः कृते आहारं यच्छन्तं रङ्गनाथं पश्यन् - ''अन्यसाहाय्यं विना कथं महती धान्यगोणी उन्नीय नीता इति पुत्रमेव पृच्छतु भवान्'' इति उक्तवान् ।

''किं मम पुत्रः एव धान्यगोण्याः अपहर्ता ?'' इति स्वगतं वदन् आश्चर्यं च अनुभवन् पुत्रं पृष्टवान् वेङ्कटेशः - ''धान्यगोणीम् उन्नेतुं कः भवतः साहाय्यं कृतवान् ? सत्यं वदतु'' इति ।

'अहम् एव चोरः' इति पिता ज्ञातवान् इति मत्वा रङ्गनाथः लज्जितः अभवत् । सः लज्जामिश्रितस्वरेण पितरम् उक्तवान् - ''कोऽपि साहाय्यं न कृतवान् । अहं स्वयमेव गोणीम् उन्नीय मम पृष्ठे स्थापयित्वा नीतवान्'' इति ।



एतत् श्रुत्वा वेङ्कटेशः आश्चर्यचकितः सन् - ''माषस्य गोणी भारयुक्ता भवति । द्वाभ्याम् अपि या कष्टेन एव उन्नेतव्या भवति तादृशीम् अहम् एकः एव उन्नीय नीतवन् अस्मि इति वदति खलु भवान् । तर्हि इदानीम् अपरां गोणीं पुनः एकवारम् उन्नीय दर्शयतु'' इति उक्तवान् ।

तदा रङ्गनाथः एकां गोणीं लीलया उन्नीय पृष्ठभागेन वहन् एकवारं खलस्य प्रदक्षिणं कृत्वा पुनः पितुः पुरतः स्थितवान् । तदा वेङ्कटेशः आश्चर्येण पुत्रं पश्यन् उक्तवान् - ''रङ्ग ! गच्छतु । आपणं गत्वा एतां गोणीं विक्रीय आगच्छतु'' इति ।

पितुः वचनं श्रुत्वा विचलितः रङ्गनाथः अधोमुखः भूत्वा इतस्ततः दृष्टवान् । तदा पिता पुत्रस्य स्कन्धे प्रीत्या हस्तं स्थापयन् -

''भोः ! अहं सत्यं वदामि । असाधारणबलं यत् भवता प्रदर्शितम् अस्ति तदर्थं मम बहुमानम् इदम् अल्पम्'' इति उक्तवान् ।

पितुः वचनं श्रुत्वा रङ्गनाथः सन्तोषेण ततः गतवान् । तदा वेङ्कटेशः ईश्वरम् उद्दिश्य - ''भोः, ईश्वर ! अत्याश्चर्यकरीम् एतां घटनां भवान् अपि दृष्टवान् खलु ?'' इति पृष्टवान् ।

तदा ईश्वरः मन्दहासपूर्वकम् उक्तवान् - ''स्वामिन् ! न केवलं यत् इदानीं प्रवृत्तं तत्, अपि तु ह्यः रात्रौ प्रवृत्ताम् एतादृशीम् एव घटनाम् अपि दृष्टवान् अस्मि'' इति ।

''एवम् ! परं चौर्यं दृष्ट्वा अपि किमपि न जानामि इति किमर्थम् असत्यम् उक्तवान् भवान् ?'' इति आश्चर्येण पृष्टवान् वेङ्कटेशः ।

''श्रीमन् ! मया ह्यः चौर्यं न दृष्टम् एव । अतः एव उक्तं - चौर्यं न जानामि इति । भवतः पुत्रेण यत् कृतं तत् चौर्यं न इति मम अभिप्रायः । भवतः पुत्रः अलसः न । सः तु श्रमशीलः'' इति उक्तवान् ईश्वरः ।

तदा वेङ्कटेशः उक्तवान् - ''सत्यम् । मम पुत्रः श्रमशीलः इत्यत्र नास्ति एव सन्देहः । उषःकाले एव उत्थाय सः गोष्ठं सम्मार्जयति । वृषभयोः कृते तृणादिकं च ददाति । अनन्तरं किमपि खादित्वा केदारं गच्छति । तत्र कार्यं कृत्वा सायं गृहम् आगच्छति । प्रतिदिनम् अपि बहुधा परिश्रमं करोति सः । परन्तु एतादृशः सः किमर्थं चौर्यं करोति इति एव आतङ्कः मम'' इति ।

''स्वामिन् ! किम् आतङ्केन ? भवान् चिन्तयतु - एतादृशः पुत्रः किमर्थं चौर्यं करोति इति । पुत्राः यदा प्राप्तवयस्काः भवन्ति तदा तेषां जीवने वित्तस्य आवश्यकता उद्भवति एव । ज्येष्ठाः इदं न जानन्ति चेत् पुत्राः चौर्यमार्गेण द्रव्यं प्राप्तुं प्रयत्नम् आरभन्ते । यदि रङ्गनाथः अन्यगृहे चौर्यं कृतवान् स्यात् तर्हि एतावता ग्रामे भवतः महान् अपमानः अभविष्यत् । अतः पुत्रः गृहस्य धान्यगोणीम् एव विक्रीतवान् यत्, अन्यगृहे चौर्यं न कृतवान् यत् तत् भवतः सौभाग्यम् एव'' इति ।

तदा वेङ्कटेशः स्वस्य प्रमादम् अवगत्य तस्मिन् एव दिने स्वस्य व्यवहारं परिष्कृतवान् । अनन्तरकाले रङ्गनाथेन चौर्येण धनं प्राप्तव्यम् एव न अभवत् ।



# कावेर्याः उत्पत्तिस्थानम्

रचना - *जयन्ती महालिङ्गम्* ❖ चित्राणि - *गोपकुमारः*



भारतस्य प्रमुखासु सप्तसु नदीषु अन्यतमा इति प्रसिद्धिं गता अस्ति कावेरीनदी । दक्षिणगङ्गा, पापनाशिनी, अखण्डकावेरी, अन्नपूर्णा इत्यादिभिः नामभिः कावेरीनदी इतिहासे प्रसिद्धिं गता अस्ति । कर्णाटके तमिळुनाडुराज्ये च ७६५ कि.मी.दूरं यावत् प्रवहन्ती एषा तत्रत्य-जनजीवनेन समरसतां प्राप्तवती अस्ति ।

## पुराणेषु कावेर्याः वर्णनम्

कावेर्याः जन्मना सम्बद्धाः बह्व्यः कथाः अस्माकं पुराणषु उपलभ्यन्त । स्कान्दपुराणानुसार कावेरीनदी कैलासे प्रवहति स्म । 'तपोनिधेः ऋषेः अगस्त्यस्य कमण्डलुं प्रविशतु' इति ताम् आज्ञापितवान् परमेश्वरः । सा तथैव कृतवती । केषाञ्चित् दिनानाम् अनन्तरम् अगस्त्यः विन्ध्यपर्वतम् अतिक्रम्य दक्षिणभारतम् आगतः । तदा कस्माच्चित् बलिष्ठात् राक्षसात् भीताः मेघाः न वृष्टवन्तः इति कारणेन दक्षिणभारते भीकरः क्षामः उत्पन्नः । कदाचित् यदा अगस्त्यः ध्याननिरतः आसीत् तदा इन्द्रस्य प्रार्थनानुसारं गणपतिः काकरूपेण आगत्य अगस्त्यस्य कमण्डलुं पातितवान् । कमण्डलुतः अधः पतितं

**अगस्त्यमुनेः कमण्डलुं पातितवान् विघ्नेश्वरः**

जलं कावेरीनदीरूपं प्राप्य जीवनदी अभवत् ।

## कोडगुगिरौ कावेरी



तलकावेर्याः लघुदेवालयः

कावेरीनदी कर्णाटकराज्यस्य कोडगुमण्डले ब्रह्मगिरिपर्वतस्य उपत्यकायां तलकावेरीसमीपे उद्भवति ।

अक्टोबर्मासे १६-१७ दिनाङ्कयोः विद्यमाने सङ्क्रमणपुण्यकाले अत्र जलम् उत्सवत् उद्गच्छति । तस्मिन् एव दिने तुलमासान्त्यं यावत् प्रवर्तमानस्य तुलासङ्क्रमणपर्वणः आरम्भः भवति । स्रोतोरूपेण उद्गच्छत् जलं पार्श्वे एव विद्यमानायां चतुरस्राकारायां पुष्करिण्यां पूरितं भवति ।

तथा स्रोतसः उद्गच्छतः जलस्य दर्शनार्थम् अनेके भक्ताः तत्र सम्मिलन्ति । जलस्य उद्गमनसमये देवं ध्यायन्तः तस्यां पुष्करिण्यां स्नानं कुर्वन्ति ते । स्नानानन्तरं पुष्करिण्याः समीपे एव विद्यमाने लघुदेवालये कावेरीं पूजयन्ति ते ।

तलकावेरीपुष्करिण्याः ऊर्ध्वभागे ९० मी. उन्नतं ब्रह्मगिरिशिखरम् अस्ति । तत्र गमनमार्गे विद्यमाने अगस्त्येश्वरदेवालये भक्ताः पूजां कारयन्ति ।

तुलासङ्क्रमणनामकं कावेरीपर्व कोडवजनानां बहु प्रधानं पर्व अस्ति । अस्मिन् मण्डले कोडवजनाः एव अधिकसंख्यया वसन्ति । जीवने एकवारं वा तुलासङ्क्रमणसमये एतत् पवित्रस्नानं करणीयम् इति नियमम् एते जनाः पालयन्तः सन्ति । एतेषु अनेके स्वापत्यस्य नाम कावेरी कावेरप्प इति वा कुर्वन्ति । पतिगृहं प्रति प्रेषणसमये पुत्र्यै यथा मातापितरौ वस्त्राभरणरत्ननाणकादिनि यच्छतः तथैव तलकावेर्यां जन्म प्राप्य बहुदूरं प्रयाणं कृत्वा पतितुल्येन समुद्रेण मिलन्तीं कावेरीनदीं पुत्रीं भावयित्वा केचन धनिकाः पूर्वतनकाले तस्यां पुष्करिण्यां सुवर्णनाणकानि आभरणानि च स्थापयन्ति स्म इति श्रूयते ।



कोडवजनाः दृढकायाः, सुन्दराः, पराक्रमिणः च । प्राचीनपरम्परायां तेषां विशिष्टः आदरः, प्रीतिः च । कोडवस्त्रीणां शाटिकाधारणशैली अपि विशिष्टा एव अस्ति । तत्सम्बद्धा काचित् कथा एवं हि श्रूयते - कदाचित् देवी पार्वती कोडगुदेशस्य युवराज्ञ्याः देवकान्तायाः स्वप्ने आगत्य - 'कोडवजनैः सर्वैः वालम्बुधिनामके स्थले मेलनीयम् । तत्र अहं तेभ्यः दर्शनं ददामि' इति उक्तवती । यदा सर्वे गत्वा तत्र प्रतीक्षमाणाः असन् तदा पार्वतीदेवी नदीरूपेण प्रवहन्ती पर्वतात् अधः आगता । जलप्रवाहस्य वेगेन तत्र स्थितानां सर्वासां

महिलानाम् अपि शाटिकाः अप्रदक्षिणरूपेण वेष्टिताः अभवन् । अतः एव कोडवस्त्रियः इदानीम् अपि शाटिकां कटिं परितः अप्रदक्षिणरूपेण (दक्षिणतः वामदिशि) वेष्टयन्ति ।

कोडवजनानां भक्त्या प्रीता माता कावेरी तेभ्यः समृद्धां प्राकृतिकसम्पत्तिं प्रदत्तवती अस्ति । समृद्धतया वर्धमानेन काफीबीजेन सह वेत्रस्य, सालस्य, श्रीगन्धस्य च समृद्धिः अस्ति अस्मिन् प्रदेशे ।

ब्रिटिष्शासनकाले मडिकेरिनगरं (मर्करा) कोडगुमण्डलस्य राजधानी आसीत् । वीरराजपेटे एतस्य प्राचीना राजधानी । वर्षस्य सर्वासु ऋतुषु अपि अत्र वातावरणं शीतलम् एव भवति । ग्रीष्मकाले केवलम् अत्र उष्णता ३० डिग्रि सेल्सियस्पर्यन्तं वर्धते ।

अस्य मण्डलस्य त्रिषु स्थानेषु प्रतिवर्षं ५००० मि.मी.तः अधिका वृष्टिः भवति ।

मडिकेरिनगरे प्रधानं दर्शनीयस्थानं तत्रत्यं दुर्गम्, दुर्गस्य अन्तः विद्यमानः प्रासादः च । उभयमपि हालेरिवंशस्थेन मुद्दुराजेन क्रि.श. १६८१ तमे वर्षे निर्मितम् । इदानीं सः प्रासादः प्रदर्शनालयत्वेन परिवर्तितः अस्ति । कोडगुमण्डलस्य विविधेभ्यः नगरेभ्यः सङ्गृहीतानि स्मारकशिलाप्रभृतीनि प्राचीनवस्तूनि तत्र स्थापितानि सन्ति ।

ब्रह्मगिरेः उपत्यकायां विद्यमाने भागमण्डले कावेर्याः प्रथमा उपनदी कनका कावेर्या मिलति । अत्र अन्तर्वाहिनी सती गङ्गा कावेर्या मिलति इति भक्ताः विश्वसन्ति । उत्तरभारतस्य प्रयागस्य त्रिवेणीसङ्गमवत् इदमपि प्रवित्रतमम् इति ते भावयन्ति । भक्तानां पापानां नाशिनी गङ्गा अन्तर्वाहिनी सती अदृश्यरूपेण आगत्य भागमण्डले कावेर्यां स्नानं कृत्वा पुनः पवित्रा भवति इति केचन भक्ताः विश्वसन्ति ।

अस्य सङ्गमस्य समीपे विद्यमानः भगण्डेश्वरदेवालयः सुप्रसिद्धेषु शिवदेवालयेषु अन्यतमः अस्ति । क्रि.श. १७९०तमे वर्षे अत्रत्यराजस्य दोड्डवीरराजेन्द्रस्य टिप्पूसुल्तानस्य च मध्ये प्रवृत्तस्य युद्धस्य समये एतस्य देवालयस्य केचन भागाः शिथिलाः अभवन् । देवालयस्य छदेः त्रीणि ताम्रफलकानि अपि नष्टानि अभवन् । वीरराजेन्द्रः तेषां स्थाने त्रीणि रजतफलकानि योजितवान् । तानि वयम् अद्यापि तत्र द्रष्टुं शक्नुमः ।

भागमण्डले 'मधुवनं' नाम मधुवाणिज्य-केन्द्रम् अस्ति । तत्र मधुमक्षिकाः अपि पोष्यन्ते । अत्र अस्माकं देशे एव विशिष्टानां मधुमक्षिकाणां



**प्रवाहेन तिर्यग्रूपेण वेष्टिताः कोडवस्त्रीणां शाटिकाः**

नीडानां प्रदर्शनालयः कश्चन अस्ति । सुगन्ध-द्रव्याणाम्, एलानां च निमित्तम् एषः प्रदेशः ख्यातः अस्ति ।

कोडगुमैसूरुमण्डलयोः सीमाप्रदेशे कुशाल-नगरम् अस्ति । मैसूरुराजः हैदर्-अलिः यदा अत्र वसतिं कृतवान् आसीत् तदा सः पुत्रस्य टिप्पू-सुल्तानस्य जननवार्तां श्रुतवान् । तां शुभवार्तां सः तत्र ज्ञातवान् इति कारणेन तस्य नगरस्य नाम 'कुशालनगरम्' इति कृतवान् । कुशालनगरस्य क्रमणसमनन्तरमेव नैसर्गिकसीमारेखा इव कावेरी-नदी कोडगुमैसूरुमण्डलयोः मध्ये प्रवहन्ती दृश्यते ।

मैसूरु-मडिकेरिमुख्यमार्गे विद्यमाने पिरियापत्तने पूर्वं कदाचित् व्याघ्राः अधिकसंख्यया वसन्ति स्म । यदा महाव्याघ्राः अत्रत्यदुर्गं, देवालयं च प्रविशन्ति स्म तदा धीराः कोडगुजनाः मृगयां कृत्वा तान् अत्यन्तं कुशलतया मारयित्वा तं प्रदेशं जनवासाय योग्यं कृतवन्तः । पिरियापत्तनस्य नार्त्कोडगु-क्लब्मध्ये सर् विन्स्टन् चर्चिल् अपि पोषकसदस्यः आसीत् । सः यदा भारतसेनायाः अधिकारी आसीत् तदा अत्र कानिचन दिनानि वासं कृतवान् आसीत् इति श्रूयते ।



काफीबीजस्य सङ्ग्रहणम्



फील्ड् मार्षल् कारियप्पः

## कोडगुमण्डलस्य अन्ये केचन विशेषाः

* कोडगुजनानां जनसंख्यायाः अनुगुणं यदा अवलोक्यते तदा ज्ञायते यत् सैन्ये तेषां महान् भागः अस्ति इति । फील्ड् मार्षल् कारियप्पः, जनरल् तिम्मय्यः इत्यादयः अत्रत्याः एव ।
* अत्र प्रतिवर्षं ४ लक्षटन्मितं मधु उत्पाद्यते ।
* ब्रिटिष्शासनात् पूर्वम् अत्र शकटानां वाहनानां च सञ्चाराय मार्गाः एव न आसन् । पादाभ्याम् अश्वेन वा अत्रत्याः प्रयाणं कुर्वन्ति स्म । परेषाम् आक्रमणस्य भयेन कोडगुराजाः मार्गान् एव न निर्मितवन्तः आसन् । मडिकेरितः कुशालनगरपर्यन्तं ब्रिटिष्जनैः निर्मितः मार्गः क्रि.श.१८५३ तमे वर्षे उद्घाटितः ।
* कावेर्याः उपनद्याः लक्ष्मणतीर्थस्य तीरे विद्यमानं नागरहोळे-राष्ट्रियोद्यानं ५७१ कि.मी. विस्तीर्णम् अस्ति ।



# सञ्चयः प्रयत्नः च

कस्मिंश्चित् लघुग्रामे अनन्तः नाम कश्चित् आसीत् । सः यदा अष्टादशवर्षीयः अभवत् तदा तस्य पितृवियोगः अभवत् । तावति काले अनन्तस्य विद्याभ्यासः अपि समाप्तः आसीत् । अनन्तः ग्रामे एव स्थिते स्वकीये अल्पे क्षेत्रे कृषिकार्यं कारयन् प्रतिवेशिग्रामस्य भूस्वामिनः जगदीशरायस्य कार्यालये उद्योगं प्राप्तुं प्रयत्नं कुर्वन् आसीत् । वर्षाभ्यन्तरे एव जगदीशरायस्य कार्यालये उद्योगं प्राप्तवान् अनन्तः । जगदीशरायः स्वस्य समीपे कार्यं कुर्वतां योगक्षेमं स्वयं विचारयन् तान् सर्वान् अपि स्वपुत्रवत् परिपालयति स्म । उद्योगप्राप्तेः केषाञ्चित् दिनानाम् अनन्तरम् अनन्तः चिन्तितवान् यत् माता प्रतिवेशिग्रामं प्रति नेतव्या, तत्रैव वासः करणीयः च इति । परन्तु प्रतिवेशिग्रामं प्रति गमनम् अनङ्गीकुर्वती तस्य माता उक्तवती - ''अहं भवतः पिता च अस्मिन् गृहे एव कष्टसुखानि अनुभूतवन्तौ । प्राणनिर्गमन-पर्यन्तम् अहम् अत्रैव स्थातुम् इच्छामि । अतः अन्यत्र कुत्रापि न आगमिष्यामि । किन्तु भवान् अन्यत्र वासं करोतु कामम् । यदा भवान् मां द्रष्टुम् इच्छति तदा अत्र आगत्य गच्छतु'' इति ।

बहुविधप्रयत्नैः अपि मातुः अङ्गीकारं प्राप्तुम् अशक्तवान् अनन्तः अन्ते - ''तत्र मम भोजनादिव्यवस्थां कः करोति ? अहं तु पाककरणं न जानामि'' इति उक्तवान् ।

तदा माता मृदु हसन्ती प्रीत्या पुत्रं पश्यन्ती - ''वधूः सिद्धा एव अस्ति । तां परिणीय तत्र नयतु । समस्या परिहृता भविष्यति'' इति उक्तवती ।

अनन्तस्य मातुलस्य शङ्करस्य पुत्री वाणी । तस्याः विवाहः अनन्तेन सह

'भगिनी'



करणीयः इति तयोः बाल्ये एव चिन्तितम् आसीत् अनन्तस्य मात्रा । अनन्तः वाणी च अपि परस्परम् इष्टवन्तौ आस्ताम् ।

अनन्तः अङ्गीकृतवान् इति कारणेन शुभे मुहूर्ते तयोः विवाहः अभवत् । वाणी पतिगृहं गतवती । केषाञ्चन दिनानाम् अनन्तरं वाणी पत्या सह प्रतिवेशिग्रामे लघुभाटकगृहे वासम् आरब्धवती ।

अनन्तेन भाटकार्थं स्वीकृते गृहे एकः एव प्रकोष्ठः आसीत् । तयोः कुटुम्बं लघु आसीत् इति कारणात् तद् गृहं वासार्थं तु अनुकूलकरम् आसीत् । ततः वर्षाभ्यन्तरे तयोः एकः पुत्रः जातः । इदानीं गृहे त्रयः जनाः अभवन् । गृहे वासार्थं स्थलम् अपर्याप्तम् अभवत् । अतः वाणी - ''गृहं बृहत् अन्विष्यतु'' इति पतिम् उक्तवती ।

''मम आयः अत्यल्पः । एवं स्थिते कथम् अन्यत् गृहम् अन्वेष्टुं शक्नुयाम् ? अस्मिन् ग्रामे भाटकम् अधिकम् इति भवती न जानाति वा ?'' इति उक्तवान् अनन्तः ।

किञ्चित्कालं यावत् चिन्तयित्वा वाणी उक्तवती - ''भवतु, वयम् एव एकस्य नूतनस्य गृहस्य निर्माणं करवाम'' इति ।

अनन्तः एतत् श्रुत्वा महता आश्चर्येण - ''किं वदन्ती अस्ति भवती ? भाटकं दातुम् एव न शक्नुमः वयम् । एवं स्थिते कथं वा स्वगृहं निर्मातुं शक्नुयाम ? दिवास्वप्नं न पश्यतु'' इति उक्तवान् ।

परन्तु वाणी स्वकीयं प्रयत्नं न त्यक्तवती । सा प्राप्ते धने एव यावत् शक्यं तावत् सञ्चयं कृत्वा किञ्चित् सङ्ग्रहणम् आरब्धवती । केषाञ्चित् दिनानाम् अनन्तरं पतिं धनसञ्चयस्य विषयम् उक्तवती सा ।

एतद् श्रुत्वा अनन्तः हसित्वा - ''भवत्या सञ्चितात् धनात् शतचतुरस्र-पादपरिमिता भूमिः अपि न लभ्यते अस्मिन् ग्रामे । कथम् एकं गृहं निर्मातुं शक्नुमः ?'' इति उक्तवान् ।

तथापि वाणी गृहनिर्माणविषयकम् अनुरोधं न त्यक्तवती । एतस्मिन् समये एव वाणी पुत्रीम् अपि प्रसूतवती । ततः वाण्याः गृहनिर्माणविषयकः अनुरोधः अधिकः जातः । तथापि अनन्तः वाण्याः वचनं निराकृतवान् ।

एवमेव दिनानि अतीतानि । कदाचित् अनन्तस्य भूस्वामी स्वस्य समीपे उद्योगं कुर्वद्भ्यः सर्वेभ्यः भूमिं निश्शुल्कं वितीर्णवान् ।

अनन्तेन अपि एकशतचतुरस्रपाद-परिमिता भूमिः प्राप्ता । एतद् सर्वं ज्ञात्वा वाणी - "अधुना वा अस्माभिः स्वकीयं गृहं निर्मातव्यमेव । पुत्राः यदा वर्धिताः भविष्यन्ति तदा तेषाम् आवश्यकताः द्रष्टव्याः खलु । तत्काले गृहनिर्माणं सर्वथा अशक्यम् । मम वचनं शृणोतु तावत् । इदानीम् एव गृहनिर्माणस्य कार्यस्य आरम्भः भवतु" इति पुनः निवेदितवती ।

अनन्तः पुनः वाण्याः उत्साहस्य भङ्गं कृतवान् । "गृहनिर्माणकार्यं सामान्यम् इति भवती चिन्तयति वा ? तदर्थं प्रभूतं काष्ठम् आवश्यकम् । इष्टिकाः, सुधा चापि आवश्यक्यः । कर्मकराणां वेतनमपि अधिकम् अस्ति । अस्मादृशाः सामान्यजनाः गृहनिर्माणं कर्तुं सर्वथा न शक्नुवन्ति" इति ।

"प्रथमम् अस्माकं धनेन भित्तिनिर्माणं कुर्मः । तदनन्तरं छदेः विषये चिन्तयाम" इति उक्तवती वाणी ।

परन्तु अनन्तः तत् श्रुत्वा अपि उत्तरम् अदत्त्वा तथैव कार्यालयं गतवान् ।

वाणी स्वेन सञ्चितं धनं कियत् अस्ति इति गणितवती । कर्मकरान् आहूय गृहनिर्माणविषये वार्तालापं कृतवती । भूस्वामिना दत्ते क्षेत्रे गृहनिर्माणम् आरब्धवती च । एतन्मध्ये अनन्तः पत्नीं "गृहनिर्माणं मास्तु" इति वक्तुम् इष्टवान् । परन्तु 'इतःपरं मम वचनम् एषा न शृणुयात्' इति मत्वा सः तूष्णीं स्थितवान् ।

अनतिकाले एव भित्तिनिर्माणकार्यमपि समाप्तम् । ग्रामे स्थितम् अग्रजं -



"काष्ठस्य व्यवस्थां करोतु" इति सूचितवती वाणी । तस्याः अग्रजः वृषभशकटेन काष्ठानि आनीय दत्त्वा अनुजायाः प्रोत्साहनं कृतवान् । क्रमशः द्वारस्य वातायनस्य च स्थापनकार्यमपि सम्पन्नम् । तावति काले वाण्या सञ्चितं धनं सर्वं व्ययितम् आसीत् ।

एकदा अनन्तः भोजनं समाप्य यदा विश्रान्तिं स्वीकुर्वन् आसीत् तदा वाणी तम् उद्दिश्य - "अस्मभ्यं भवतः मित्रेषु केऽपि ऋणं न यच्छेयुः वा ? छदेः निमित्तं तालवृक्षस्य काष्ठं मृच्छदं च क्रीणीमः चेत् गृहनिर्माणकार्यं समाप्तप्रायम् । एतावत् कृत्वा ताडपत्रैः गृहं यदि आच्छाद्यते तर्हि सुन्दरं न दृश्यते खलु" इति उक्तवती ।

वाण्या उक्तं श्रुत्वा अनन्तः कोपेन तां

पश्यन् - ''अद्यपर्यन्तम् अहं कदापि याचनं न कृतवान् । इतः परम् अपि न करिष्यामि । गृहं नास्ति चेदपि चिन्ता नास्ति । मम गौरवं नष्टं न भवेत्'' इति उक्तवान् ।

एतस्याः घटनायाः अनन्तरं दिन-द्वयाभ्यन्तरे एव बाल्यसखी वाणीं द्रष्टुम् आगतवती । प्रवृत्तं सर्वं विषयं ज्ञात्वा सा - ''पूर्वमेव भवती मां किमर्थं न उक्तवती ? अस्माकं क्षेत्रे उत्तमाः तालवृक्षाः बहु सन्ति । छदेः निर्माणार्थं यावन्तः वृक्षाः आवश्यकाः तावतः प्रेषयिष्यामि । धैर्येण तिष्ठतु भवती'' इति उक्तवती ।

एवं सख्या प्रेषितैः तालकाष्ठैः छदेः निर्माणम् अभवत् । अनन्तरं मृच्छदं क्रेतुं वाणी यन्त्रागारं गतवती । भागशः धनदानेन क्रेतुं शक्यते इति विचार्य ज्ञातवती । परन्तु यन्त्रागारस्य स्वामी - ''तदर्थं कस्यापि प्रतिभूत्वम् आवश्यकम्'' इति नियमं कृतवान् ।

कः प्रतिभूत्वं दद्यात् इति चिन्तायां निमग्ना आसीत् वाणी । एवमेव कतिचन दिनानि अतीतानि । एकस्मिन् दिने प्रातः वाणी वातायनस्य समीपे स्थित्वा केशप्रसाधनं कुर्वती आसीत् । तदा वृषभशकटेन मृच्छदान् स्वीकृत्य आगच्छन्तम् अनन्तं दृष्टवती सा । एतद् दृष्ट्वा सा आश्चर्येण बहिः आगतवती ।

अनन्तः पत्नीं दृष्ट्वा मृदु हसन् - ''एते सर्वे मृच्छदाः अस्माकं गृहस्य कृते एव । प्रयत्नः अस्ति चेत् मानवेन साधयितुम् अशक्यं किमपि नास्ति इति भवती निरूपितवती अस्ति । इदानीम् अपि मया किमपि न क्रियते चेत् बहु अन्याय्यं कृतं भविष्यति'' इति उक्तवान् । पत्यौ जातं परिवर्तनं दृष्ट्वा नितरां सन्तुष्टा वाणी - ''यदि पूर्वमेव भवान् मम सहकारम् अदास्यत् तर्हि एतावता अस्माकं कष्टं परिहृतम् अभविष्यत्'' इति उक्तवती ।

तदा अनन्तः उक्तवान् - ''किमपि भवतु नाम । भवती लघुगृहवासस्य कष्टं परिहृतवती अस्ति । पत्युः सम्पादनम् अल्पं चेदपि तत्रैव सञ्चयं कृत्वा महत्कार्यम् एव साधितवती अस्ति भवती'' इति ।

''सत्यम्, अस्माकं स्तरानुगुणं अस्माभिः कृतम् एतद् महत् कार्यम् एव'' इति बहुसन्तोषेण उक्त्वा हसितवती वाणी ।



आंग्लान् सम्मुखीकृतवन्तः धीराः - ६

# वेलूरुक्रान्तिः

रचना - मीरा उग्रा ◆ चित्रम् - टि.जि. एस्



















अनन्तरम् -
स्वामिन् ! उष्णीषधारणम् अनुमन्यताम् ।


तिलकस्य, कर्णाभरणस्य,
श्मश्रुणः च धारणं संस्कृतिचिह्नम् । तत् अस्माभिः अनुसरणीयम् ।


हास्यास्पदम्


सैनिकाः नूतननियमान् न पालितवन्तः इति कारणेन तेषु १९ जनाः विचारणाय मद्रास् प्रति प्रेषिताः ।
अत्र नियम-भङ्गः न सह्यते । तेभ्यः योग्यदण्डनं देयम् एव ।


सैनिकेभ्यः १०० वेत्रप्रहाराः दत्ताः ।


वार्ता यदा वेलूरुनगरं प्राप्ता तदा ...
स्वयं न त्यज्यते चेत् त्याजयाम ।
परम्परागत-सम्प्रदायस्य त्यागः करणीयः वा ?
















टिप्पूसुल्तानः श्रीरङ्गपत्तने पराजितः सन् मृतः । तस्य पुत्रः एव मोयिजुद्दीन् ।
















४०० जनाः क्रान्तिकारिणः प्राणैः वियुक्ताः अभवन् । अनेके व्रणिताः । टिप्पूसुल्तानस्य पुत्रं, तस्य कुटुम्बसदस्यान् च ईस्ट्-इण्डियासंस्था बद्ध्वा प्रथमं मद्रासनगरं प्रति पश्चात् ततः कल्कत्तां प्रति च प्रेषितवती ।



# महाभारतम्

यद्यपि नहुषः अत्यन्तं सज्जनः आसीत्, तथापि इन्द्रपदव्याः प्राप्तेः अनन्तरं भोगासक्तः अभवत् । कदाचित् देवता-स्त्रीभिः सह विहरन् सः इन्द्रस्य पत्नीं शचीदेवीं दृष्ट्वा मोहितः अभवत् । ''अहम् अधुना इन्द्रः अस्मि । अतः भवती मम पत्नी भवेत्'' इति शचीदेव्यै वार्तां प्रेषितवान् नहुषः । तेन भीता शचीदेवी बृहस्पतिं शरणं गतवती ।

एतं विषयं ज्ञात्वा नहुषः बृहस्पतये कुपितवान् । ऋषयः, मुनयः, देवताः च ''परस्त्रीणां विषये व्यामोहः पापकरः'' इति यदा बोधितवन्तः तदा सः तान् निन्दितवान् । ''एतादृशानि कार्याणि बहूनि इन्द्रः अपि कृतवान् अस्ति । तदा किमर्थं तं नीतिं न बोधितवन्तः भवन्तः ?'' इति प्रतिपृष्टवान् च ।

अन्ते अनन्यगतिकाः देवाः सर्वे सम्भूय बृहस्पतेः समीपं गत्वा उक्तवन्तः - ''भोः गुरुदेव ! नहुषः अधुना बहु कुपितः अस्ति । शचीदेवी तस्य पत्नी यथा भवेत् तथा भवान् करोतु । अन्यथा अस्मिन् लोके अस्माकं जीवनमेव कष्टकरं भवेत्'' इति ।

एतं विवाहप्रस्तावं श्रुत्वा शचीदेवी बृहस्पतिम् उक्तवती - ''अहं सर्वविधमपि दुःखं सोढुं सिद्धा अस्मि । परन्तु नहुषस्य पत्नी तु कदापि न भविष्यामि । अहं भवन्तं शरणं गतवती अस्मि । इदानीं मम संरक्षणं भवतः दायित्वम्'' इति । तदा बृहस्पतिः अपि प्रतिज्ञां कृतवान् यत् अहं शचीदेव्याः रक्षणं करिष्यामि इति ।

किन्तु तात्कालिकरूपेण नहुषस्य कोपस्य शमनार्थं कोऽपि उपायः चिन्तनीयः एव आसीत् । अतः बृहस्पतिः उक्तवान् - ''नहुषः इदानीं गर्वेण उन्मत्तः, विवेचना-शून्यः च जातः सन् अवनतेः सीमां




प्राप्तवान् अस्ति । अतः सद्यः समस्यायाः व्याक्षेपणार्थं शचीदेवी नहुषस्य समीपं गत्वा विवाहार्थं कालावकाशं पृष्ट्वा आगच्छेत् । पश्चात् कालः एव अस्माकं समस्यायाः परिहारं सूचयिष्यति'' इति ।

बृहस्पतेः सूचनानुसारं शचीदेवी नहुषस्य समीपं गत्वा - ''भोः ! इन्द्रस्य विषये मया अद्यपर्यन्तं कापि वार्ता न ज्ञाता अस्ति । यदा तस्य विषये कामपि वार्तां ज्ञास्यामि तदा अहं भवता परिणीता भविष्यामि'' इति उक्तवती ।

नहुषः ''अस्तु'' इति अङ्गीकृतवान् ।

अनन्तरम् ऋषयः इन्द्रस्य समीपं गत्वा तस्य पापस्य परिहारार्थं तेन अश्वमेधयागं कारितवन्तः । पश्चात् इन्द्रः स्वर्गं प्रत्यागतवान् । परन्तु नहुषस्य तेजः दृष्ट्वा भयेन सः पुनः अपि पलायनं कृतवान् । तदा शचीदेवी तम् अन्विष्य तस्य समीपं गत्वा - ''कृपया भवान् नहुषं मारयित्वा पुनः भवतः इन्द्रपदवीं प्राप्नोतु । अन्यथा अहं प्राणत्यागं करिष्यामि । अहं तस्य पीडां सोढुं न शक्नोमि'' इति उक्तवती ।

तदा इन्द्रः उक्तवान् - ''प्रिये, भयं मास्तु । इदानीं तं जेतुं मम सामर्थ्यं नास्ति । अतः उपायेन एव सः जेतव्यः । सः उपायः अपि भवदधीनः एव अस्ति । नहुषः तु भवतीम् इच्छति । अतः भवती तं वदतु यत् ऋषिभिः उह्यमानया शिबिकया भवान् मम गृहम् आगच्छतु इति । भवत्याः निमित्तं सः तथा करिष्यति एव । तेनैव तस्य अधःपतनं भविष्यति'' इति ।

शचीदेव्याः सूचनाम् आनन्देन अङ्गीकृत्य तदनुगुणं नहुषः ऋषिभिः शिबिकां वाहयित्वा आनन्देन प्रस्थितवान् । मार्गे तस्य ऋषीणां च मध्ये विवादः आरब्धः । तदा कुपिताः ऋषयः ''सर्पो भव'' इति शापं दत्तवन्तः । सर्पत्वं प्राप्य नहुषः यदा स्वर्गभ्रष्टः अभवत् तदा इन्द्रः पुनः स्वपदवीं प्राप्य शचीदेव्या सह सुखेन जीवितवान् ।

शल्यः धर्मराजम् एतां कथाम् उक्त्वा ततः दुर्योधनस्य समीपं गतवान् ।

द्रुपदस्य पुरोहितः पाण्डवानां राजदूतरूपेण यावत् हस्तिनापुरं प्राप्तवान् तावति काले पाण्डवकौरवयोः पक्षयोः यैः आगन्तव्यम् आसीत् ते आगताः आसन् ।

पाण्डवानां परतया युद्धं कर्तुं सप्त-अक्षोहिणीसेना उपप्लव्ये सम्मिलिता

अभवत् । महारथिः युयुधानः, चेदिराजः, धृष्टकेतुः च प्रत्येकम् एकाक्षोहिणीमितया सेनया आगतवन्तौ । पाण्ड्यराजः पर्वतवासिभिः योधैः सह धर्मराजस्य साहाय्यार्थम् आगतवान् । द्रुपदः अपि अनेकदेशानां वीरैः, महारथिभिः स्वपुत्रैः, महत्या सेनया च सह तत्र प्राप्तवान् । मत्स्यदेशस्य राजा विराटः गिरिजनसैनिकान् स्वेन सह आनीतवान् । एवम् अन्येभ्यः बहुभ्यः देशेभ्यः वीराः स्वध्वजान् गृहीत्वा पाण्डवानां परतया युद्धं कर्तुम् आगत्य सम्मिलितवन्तः ।



तस्मिन् एव समये दुर्योधनस्य पक्षे युद्धं कर्तुम् एकादशाक्षोहिणीपरिमिता सेना सज्जा आसीत् । नरकासुरस्य पुत्रः भगदत्तः एकाक्षोहिणीमितया शूरभिल्लवानां सेनया सह दुर्योधनस्य साहाय्यार्थम् आगतः आसीत् । भूरिश्रवाः शल्यः च सम्भूय एकाक्षोहिणीमितया सेनया आगतौ आस्ताम् । पुष्प-पल्लवादिभिः अलङ्कृतैः योधैः सह कृतवर्मा अपि उपस्थितः आसीत् । सिन्धुसौवीरादिदेशेभ्यः जयद्रथप्रभृतिभिः अनेकैः राजभिः एकाक्षोहिणीमिता सेना आनीता आसीत् । दक्षिणस्य माहिष्मतीनगरात् नीलः भयानकैः आयुधैः युक्तैः योधैः सह आगतः आसीत् । अवन्तीराजः स्वस्य अक्षोहिणीद्वयमितां सेनां स्वीकृत्य आगतः आसीत् । केकयदेशस्य राजा एकाक्षोहिणीमितां सेनाम् आनीतवान् आसीत् । अन्यैः अनेकैः लघुराजैः आनीता सेना अक्षोहिणीत्रयमिता आसीत् ।

दुर्योधनस्य परतया युद्धं कर्तुं ये प्रमुखाः आगतवन्तः आसन् तेषां निमित्तं हस्तिनापुरे स्थलम् अपर्याप्तम् अभवत् । ताः सेनाः पञ्चनदप्रदेशे, कुरुजाङ्गले, रोहितकारण्ये, मरुभूम्याम्, आहिच्छत्रे, कालकूटे, गङ्गाकूटे, वाराणस्यां, वाटधाने, विशालायाः यमुनायाः शीतले तीरे च शिबिराणि स्थापितवत्यः ।

एतेन क्रमेण तत्र तत्र शिबिराणि कृतवतीनां, युद्धोत्साहेन युक्तानां सेनानां दर्शनं कुर्वन् द्रुपदस्य पुरोहितः हस्तिनापुरं प्राप्य धृतराष्ट्रस्य सभां प्रविष्टवान् । तस्य वृद्धब्राह्मणस्य योग्यं सत्कारं कृत्वा विदुरः, भीष्मः, धृतराष्ट्रः च पाण्डवानां कुशलवार्तां पृष्टवन्तः । पुरोहितः अपि दुर्योधनादीनां कुशलं विचार्य पूर्णायां सभायां सर्वे यथा शृणुयुः तथा उच्चैः एवम् उक्तवान् -



''मान्याः सभ्याः ! धृतराष्ट्रः पाण्डुराजः च एकस्य पितुः पुत्रौ एव । पूर्वजानां सम्पत्तौ उभयोः अपि समानः अधिकारः अस्ति एव । अधुना धृतराष्ट्रस्य पुत्राः स्वपितुः सम्पत्तिम् अनुभवन्तः सन्ति । पाण्डवाः च पैतृकसम्पत्तेः वञ्चिताः सन्ति । तत्र कारणं किम् ? पाण्डवानां कृते पूर्वं दुर्योधनः कीदृशानि कष्टानि दत्तवान् इति भवन्तः जानन्ति एव । पाण्डवाः दीर्घायुष्मन्तः यदि न अभविष्यन् तर्हि ते एतावति काले मृताः अभविष्यन् । न केवलं तावत्, पाण्डवाः स्वसामर्थ्येन यत् राज्यं निर्मितवन्तः आसन् तदपि धृतराष्ट्रः तत्पुत्राः च कपटद्यूतेन अपहृतवन्तः । मूर्तिमत्पापरूपः शकुनिः एतेषां दुर्मार्गिणां साहाय्यं कृतवान् । पाण्डवाः द्वादश वर्षाणि यावत् अरण्ये पत्न्या सह अपारं कष्टम् अनुभूतवन्तः । विराटनगर्यां तैः अनुभूता कष्टपरम्परा तु अवर्णनीया एव । तथापि सज्जनाः पाण्डवाः कौरवान् 'वयं शान्त्या एव वसामः' इति वदन्तः सन्ति । ते तु कौरवैः सह युद्धं न इच्छन्ति । युद्धेन प्रजानां महती हानिः भविष्यति । अन्येषां यथा क्लेशः न स्यात् तथा स्वस्य भागस्य राज्यं प्रतिप्राप्तव्यम् इति तेषाम् इच्छा । दुर्योधनस्य तु स्वस्य बले महान् विश्वासः अस्ति । तस्य पूरकतया महती सेना अपि तस्य पक्षं प्रति आगता अस्ति इति कारणेन 'अहं पाण्डवान् जेष्यामि एव' इति भ्रान्तिः तस्य मनसि अस्ति । दुर्योधनस्य समीपे चतुरक्षोहिणी-परिमिता सेना अधिका अस्ति चेत् अपि ततः किं वा साधितं भवेत् ? पाण्डवानां सेनायां स्थिताः सात्यकिः, भीमः, नकुलः, सहदेवः इत्यादिषु एकैकः अपि एकाक्षोहिणीमितायाः सेनायाः समः अस्ति । अर्जुनः एकः एव एकाक्षोहिणी-मितायै सेनायै अलम् । कृष्णः अपि तादृशः एव । अतः एतादृशैः बलिष्ठैः पाण्डवैः सह युद्धं कर्तुं बुद्धिमान् कोऽपि प्रयत्नं न करोति । पाण्डवानां मैत्रीसम्पादनाय एतस्मात् ऋते अन्यः अवकाशः न लभ्यते'' इति ।

द्रुपदस्य पुरोहितस्य वचनं श्रुत्वा भीष्मः उक्तवान् - ''भोः विप्रवर्य ! यद्यपि भवतः वचनम् अप्रियम् अस्ति, तथापि यथार्थम् एव अस्ति । पाण्डवानां युद्धसन्नाहः, सन्धानार्थं प्रयत्नः च योग्यः एव अस्ति । पाण्डवाः बहु कष्टम् अनुभूतवन्तः इत्यत्र

नास्ति विप्रतिपत्तिः । अर्जुनः अनेकानि अस्त्राणि जानन् महावीरः अस्ति । वज्रायुधपाणिः इन्द्रः अपि तस्य पुरतः स्थातुं न शक्नोति । तथा सति अन्येषां का वा गतिः ?'' इति उक्तवान् ।

भीष्मस्य वचनस्य समाप्तेः पूर्वमेव कर्णः उत्थाय उक्तवान् - ''अयि भोः ब्राह्मणोत्तम ! भवता उक्तः विषयः सर्वैः पूर्वमेव ज्ञातः अस्ति । धर्मराजः स्वेन अङ्गीकृतस्य नियमस्य अनुगुणम् एव द्यूते पराजयं प्राप्य वनं गतवान् आसीत् । अधुना मूर्खवत् प्रत्यागत्य सः राज्यं पृच्छन् अस्ति । पाण्डवानां पराक्रमात् दुर्योधनस्य भीतिः नास्ति । अतः सः तेभ्यः पादपरिमितभूमिम् अपि न दास्यति । यदि ते वस्तुतः राज्यम् इच्छन्ति तर्हि तैः पुनः वनवासाय गन्तव्यम् । नीचाः ते राज्यार्थं धर्मम् अपि परित्यक्तुं सिद्धाः जाताः सन्ति'' इति ।

तदा कुपितः भीष्मः - ''रे कर्ण ! किमर्थं व्यर्थं भवान् प्रलपति ? उत्तरगोग्रहणप्रसङ्गे अर्जुनः एकाकी एव कथं लीलया समग्रां कौरवसेनां जितवान् इति एतत् विस्मृतवान् वा भवान् ? यदि एतेन यथा उक्तं तथा न क्रियते अस्माभिः तर्हि वयम् अर्जुनस्य कोपाग्नौ पतित्वा कीटवत् मरणं प्राप्स्यामः'' इति उक्तवान् ।

तदा धृतराष्ट्रः मध्ये प्रविश्य कर्णं बोधयित्वा - ''भीष्मेण उक्तं युक्तम् एव अस्ति'' इति तं ज्ञापयित्वा द्रुपदस्य पुरोहितं प्रति - ''आर्य ! अहं सम्यक् चिन्तनं कृत्वा मम उत्तरं सञ्जयस्य द्वारा पाण्डवेभ्यः प्रेषयिष्यामि । भवान् अधुना पाण्डवानां



समीपं गन्तुम् अर्हति'' इति उक्तवान् ।

एवं तं पुरोहितम् आदरपूर्वकं प्रतिप्रेष्य धृतराष्ट्रः सञ्जयम् आहूय उक्तवान् - ''भोः सञ्जय ! भवान् इदानीम् एव प्रस्थाय उपप्लव्यं गत्वा धर्मराजेन मिलित्वा तस्य कुशलं विचार्य ते कष्टं सर्वं तीर्णवन्तः यत् तदर्थं तान् प्रथमम् अभिनन्दतु । पश्चात् कृष्णं, पाण्डवानां साहाय्यार्थम् आगतान् अन्यान् प्रमुखान् च भवान् विचारयतु । पश्चात् सर्वान् उद्दिश्य 'अस्माकं कारणेन पाण्डवाः बहु कष्टम् अनुभूतवन्तः । तेभ्यः तु अस्माकं किमपि कष्टं न अभवत् । धर्मराजः तस्मात् एव युद्धं कर्तुं निश्चितवान् अस्ति इति ज्ञात्वा मयि भयम् उत्पन्नम् अस्ति । भीष्मार्जुनौ तु असमानवीरौ' इत्यादिक्रमेण भवान् यद् यद् वक्तुम् इच्छति



तत्सर्वं वदतु । कथञ्चित् अपि युद्धं यथा न स्यात् तथा कर्तुं भवान् प्रयत्नं करोतु'' इति उक्तवान् ।

धृतराष्ट्रेण प्रेषितः सञ्जयः रथम् आरुह्य उपप्लव्यं गत्वा धर्मराजेन मिलितवान् । उभौ अपि परस्परं कुशलं विचारितवन्तौ । पश्चात् सञ्जयः सर्वान् उद्दिश्य एवम् उक्तवान् - ''शान्तिम् इच्छन् धृतराष्ट्रः माम् अत्र प्रेषितवान् अस्ति । तदर्थं पाण्डवैः अपि सहकरणीयम् । समग्रं जगत् पाण्डवान् आदर्शपुरुषान् भावयति । अतः तेषु स्थितः लघुदोषः अपि पर्वतायते । जयपराजय-विषये 'एवम् एव भविष्यति' इति वक्तुं न शक्यते । कौरवाणां मारणेन राज्यप्राप्तिः न युक्ता । अग्रजानुजादीनां मारणात्, स्वयं मरणप्राप्तिः एव श्रेयस्करी । पाण्डवान् देवताः अपि जेतुं न शक्नुवन्ति । तथैव कौरवान् अपि । अनयोः उभयोः बलयोः यस्य कस्यापि जयं भवति चेदपि विजयी सुखी न भवति इति मम विश्वासः । पाण्डवाः तु चतुर्विध-परुषार्थसाधकात् भिन्नं मार्गं सर्वथा न अनुसरन्ति इति अहं जानामि एव । अतः केनापि प्रकारेण शान्तिः यथा स्यात् तथा करणीयम् इति भवतः सर्वान् अपि प्रार्थये'' इति ।

सञ्जयस्य वचनं श्रुत्वा धर्मराजः उक्तवान् - ''भोः सञ्जय ! मया कदापि युद्धे अत्युत्साहः प्रदर्शितः किम् ? शान्त्या यत् प्राप्तुं शक्यते तत् युद्धेन प्राप्तव्यम् इति चिन्तयितुम् अहं तु मूर्खः न । बुद्धिमान् स्वसुखेन सह इतरेषां सुखम् अपि चिन्तयेत् । समग्रं वनम् एव यदा अग्निना व्याप्तं भवति तदा यदि कश्चित् 'मम कष्टम् आपतितम्' इति रुद्यात् तर्हि तत् मूर्खतायाः ऋते किम् अन्यत् ? दुष्टं दुर्योधनं समर्थयन् धृतराष्ट्रः कथं वा सुखी स्यात् ? कपटद्यूतस्य दिने एव कौरवाणां विनाशः आरब्धः अस्ति । तथापि तादृशैः कौरवैः सह शान्त्या जीवितुम् अस्माकं कोऽपि आक्षेपः नास्ति । तैः अस्मद्विषये पूर्वं कृतान् सर्वान् दोषान् अपि विस्मर्तुं वयं सिद्धाः । तदर्थम् अस्मभ्यम् इन्द्रप्रस्थमात्रस्य दानम् अपि वरम् एव । दुर्योधनः एव साम्राज्यस्य चक्रवर्ती भवतु नाम'' इति ।

तदा सञ्जयः - ''धर्मराज ! भवान् कदापि धर्मभ्रष्टः न अभवत् । तुच्छ-राजभोगार्थं भवान् स्वस्य धवलकीर्तिं कलङ्कितां करोति किम् ? युद्धस्य चिन्तनं

कर्तांङ्कितां करोति किम् ? युद्धस्य चिन्तनं परित्यजतु । कौरवाः तु भवते भागं न यच्छन्ति । युद्धं कृत्वा राज्यप्राप्तेः अपेक्षया भवान् सोदरैः सह भिक्षाटनं कृत्वा जीवनं करोति चेत् अधिकां कीर्तिं प्राप्तुं शक्नोति'' इति उक्तवान् ।

सञ्जयस्य धर्माधर्मव्याख्यान अनङ्गीकुर्वन् धर्मराजः उक्तवान् - ''भोः सञ्जय ! भवतः व्याख्यानं तु विशिष्टम् एव विद्यते । आपत्काले आत्मरक्षणाय अधर्माश्रयणम् न दोषाय इति शास्त्रं वदति । मम तु अधुना कृष्णः यत् वदति तदेव धर्मः'' इति ।

तदा कृष्णः अपि सञ्जयम् उद्दिश्य - ''भोः ! भवान् शान्तिः शान्तिः इति वदति खलु । क्षत्रियाणां युद्धकरणं धर्मः न इति किं भवान् वदति ? अधर्मिणः तु ते धृतराष्ट्रस्य पुत्राः, ये च अधर्ममार्गेण पाण्डवानां सम्पत्तिम् अपहृतवन्तः । तैः कृते कार्ये कः वा राजधर्मः अस्ति ? लुण्टाकस्य दुर्योधनस्य च कोऽपि भेदः अस्ति किम् ? अद्यपर्यन्तम् अपि सः पाण्डवानां सम्पत्तिम् अनुभूतवान् । इदानीं वा सः किमर्थं तेषां सम्पत्तिं प्रत्यर्पयितुं न इच्छति ? अन्येषां राज्यस्य उपभोगात् भिक्षाटनम् एव वरम् इति न भासते वा ? अतः अधर्मिणां नाशाय युद्धकरणं धर्मः एव । तथा युद्धं कुर्वन्तः मरणं प्राप्नुवन्ति चेदपि तत् पाण्डवानां कीर्तिम् एव वर्धयति । एतं विषयं भवान् कौरवाणां सभायां वदतु'' इति उक्तवान् ।

पश्चात् सञ्जयः - ''मया यदि कोऽपि अपराधः कृतः स्यात् तर्हि कृपया क्षम्यताम्'' इति सर्वान् सम्प्रार्थ्य ततः यदा प्रस्थितवान् तदा धर्मराजः तम् उक्तवान् - ''भोः सञ्जय ! वयं वस्तुतः शान्तिम् एव इच्छामः । यदि धृतराष्ट्रः अपि शान्तिम् इच्छेत् तर्हि अस्माकं राज्ये कश्चित् भागं वा ददातु सः । अस्मभ्यं पञ्चजनेभ्यः आहत्य पञ्चग्रामान् ददाति चेदपि अलम् । इन्द्रप्रस्थं, वृकप्रस्थं, वारणावतं जयन्तं, पञ्चमम् अन्यं यं कञ्चित् ग्रामं च अस्मभ्यं ददातु सः । तेन सर्वेऽपि सुखेन जीवितुं शक्नुमः । अहं शान्त्यर्थं यथा सिद्धः अस्मि तथा एव युद्धार्थम् अपि सिद्धः अस्मि इति धृतराष्ट्रं वदतु'' इति ।

एतं सन्देशं प्राप्य सञ्जयः हस्तिनापुरं प्रति प्रस्थितवान् ।



# NEWS FLASH

## अश्लीलतां न इच्छन्ति छात्राः

विद्यार्थिनः दौष्ट्ये अश्लीलव्यवहारे च सुलभतया प्रवर्तन्ते इति चिन्तनं न युक्तम् इति वदति सद्यःकाले प्रवृत्ता घटना । एषु दिनेषु प्रसिद्धलेखकेन लिखितस्य नूतनकथाग्रन्थस्य



अश्लीलोपेतम् अध्यायं कश्चित् प्रकाशितवती काचित् जनप्रियसंस्था । चन्दीगढीयाः जि.सि.जि.महाविद्यालयीयाः ' स्नातककक्ष्यायाः विद्यार्थिनः एतस्य कृत्यस्य विषये प्रबलं विरोधं प्रकटितवन्तः । ते खलु अभिनन्दनपात्राणि ?

## अपूर्वतां दर्शितवन्तौ शुनकौ....

'मार्जाराः जीवने चतुराः, ते कथमपि मरणात् आत्मनः रक्षणे समर्थाः' इति वचनं सर्वत्र श्रूयते । एतत् वितथीकर्तुम् इव द्वाभ्यां शुनकाभ्याम् अपूर्वं सामर्थ्यं प्रदर्शितम् । तैवानदेशे घोरः भूकम्पः प्रवृत्तः । असङ्ख्याः जनाः मरणं प्राप्तवन्तः । एतादृशे अवसरे उभौ शुनकौ ४३७ घण्टानाम्



अनन्तरम् अवशेषानाम् अधस्तात् सजीवं बहिः आगतौ आनन्देन । कश्चन आसन्दः तयोः रक्षकः आसीत् । शीतके संरक्षितः आहारः तयोः संरक्षणम् अकरोत् ।

## रोगात् अपि भीकरी

देहलीनगरे "The Delhi Society for the Promotion of the National Use of Drugs"नामिका संस्था अस्ति । तया विश्वस्वास्थ्यसंस्थायाः (W.H.O.) कार्यस्य अङ्गतया भारतीयानाम् औषधसेवनविषये एकं सर्वेक्षणं कृतम् । ततः यः निष्कर्षः प्राप्तः स तु नितरां भीतिकरः । ततः ज्ञायते - भारते वैद्याः त्वरया किमपि औषधसेवनं सूचयन्ति, जनाश्च



शरीरस्य अधिग्रहणप्रवृत्तिम् उपेक्ष्य औषधं सेवन्ते ! अस्माकं देशस्य राजधान्यां स्थितेषु प्रसिद्धचिकित्सालयेषु विद्यमानाः ६०% वैद्याः एण्टिबयोटिक्-औषधस्य सेवनं यत्र सूचयन्ति तत्र वस्तुतः तादृशस्य सेवनस्य आवशयकता एव न भवति ! एतादृशं सूचनं क्वचित् रोगात् अपि घोरतरं भवति । अनपेक्षितौषधसेवनं मूल्यवृद्धेः हेतुः भवति । यत्र कोटिशः जनाः औषधसेवनात् वञ्चिताः सन्ति तत्र एतादृशी मूल्यवृद्धिः कथं वा युज्येत ?

चन्दमामायाः
अनुबन्धः - ११२



ଅନୁପମ ଭାରତ

# लम्बाणिजनाः

औरङ्गजेबस्य जैत्रयात्रायाः फलरूपेण लम्बाणिजनाः राजस्थानतः दक्षिण-भारतस्य प्रदेशान् आगतवन्तः । लम्बाणिजनानां २००० वर्षाणाम् इतिहासः अस्ति युरोपखण्डीयाः रोमानि-जिप्सिजातीयाः एते आफघानिस्थानस्य खातस्य द्वारा भारतम् आगत्य राजस्थाने वासम् आरब्धवन्तः इति श्रूयते मोगलजनानां आयुधानि, पटगृहस्य साधनानि च वहन्तः लम्बाणिजनाः तेषां सेवां कुर्वन्ति स्म आरम्भदिनेषु आङ्ग्लानां चाररूपेण यद्यपि एते कार्यं कृतवन्तः, तथापि अग्रे एते टिप्पूसुल्तानस्य साहाय्यं कृतवन्तः ।



सञ्चारिजीवनं लम्बाणिजनानां बहु प्रियम् । ते जीविकार्थम् एकस्मात् प्रदेशात् अन्यं प्रदेशं गच्छन्ति । मृद्घटाः, अल्युमिनियंपात्राणि, कण्डोलः, तृणकटः इत्यादयः एव एतेषां सम्पत्तिः । एते सर्वे मिलित्वा स्वेषु अन्यतमं नायकत्वेन चिन्वन्ति ।

हिन्दुसम्प्रदायेषु कानिचन एते अनुसरन्ति । एते उत्सवप्रियाः । तिरुपतिश्रीवेङ्कटेश्वरम् एते कुलदेवतां भावयन्ति, पूजयन्ति च । अध्ययन-क्रीडादिषु लम्बाणिमहिलानां अधिका आसक्तिः सहजतया भवति । एताः वर्णमयानि वस्त्राणि धरन्ति । शिरसः अवगुण्ठनं कृत्वा पादपरिमितं दीर्घम् उत्तरीयं धरन्ति एताः । वस्त्राणाम् उपरि रमणीयानि ऊतिकार्याणि कुर्वन्ति एताः । एतासां शाटिकानां चोलानां च उपरि लघु लघु काचखण्डाः योजिताः भवन्ति । एताः कूर्परपर्यन्तमपि कङ्कणानि धरन्ति । रजतं, सुवर्णं, कांस्यं, पित्तलम् इत्यादिभिः लोहैः गजदन्तैः च निर्मितानि आभरणानि आशरीरं धरन्ति एताः । पुरुषाः तु वेष्टीं, युतकं, शिरसि प्रोञ्छं च धृत्वा सामान्याः कृषिकाः इव भवन्ति ।

**पुराणकालस्य राजानः**

# मयूरध्वजः

द्वापरयुगस्य अन्ते मणिपुरराज्यं मयूरध्वजः नाम राजा पालयति स्म । सः धर्मपरः आसीत् । प्रजानां कष्टम् आत्मानः कष्टं भावयन् सः तासां कापि न्यूनता यथा न भवेत् तथा रक्षति स्म ।

कदाचित् मयूरध्वजः यागं कर्तुं निश्चितवान् । तदर्थं यागाश्वं विजययात्रार्थं प्रेषितवान् । यागाश्वस्य पृष्ठतः तस्य पुत्रः सुचित्रः रक्षणार्थं गतवान्, यश्च 'ताम्रध्वजः' इत्यपि ख्यातः आसीत् ।

तत्समये एव धर्मराजः अपि यागम् आरब्धवान् आसीत् । सः अपि यागाश्वं विजययात्रार्थं प्रेषितवान् । यागाश्वस्य पृष्ठतः कृष्णः अर्जुनः च रक्षणार्थं गतवन्तौ ।

उभौ यागाश्वौ अपि यदा परस्पराभिमुखम् आगतौ तदा सुचित्रः कृष्णार्जुनौ स्मृतिविहीनौ कृत्वा ततः अग्रे गतवान् ।

किञ्चित्समयानन्तरं कृष्णार्जुनौ सचेतनौ जातौ । अनन्तरं विषयं ज्ञात्वा - ''आवाम् एव स्मृतिहीनौ कृतवतः तस्य राजकुमारस्य पिता कीदृशः स्यात् ?'' इति तयोः कुतूहलम् उत्पन्नम् । अनन्तरम् उभौ अपि ब्राह्मणवेषं धृत्वा मणिपुरम् आगतवन्तौ ।

मयूरध्वजः तयोः सत्कारं कृत्वा आगमनस्य कारणं पृष्टवान् ।

''आगमनसमये मार्गे स्थिते अरण्ये कश्चित् सिंहः मम पुत्रं गृहीतवान् । तदा अहं 'भवतः बुभुक्षानिवारणार्थं मां खादतु । मम पुत्रं त्यजतु' इति प्रार्थितवान् । तदा सः सिंहः - 'अहं भवन्तं न खादामि । मयूरध्वजस्य शरीरस्य अर्धभागम् आनयति चेत् भवतः पुत्रं त्यजामि' इति उक्तवान्'' इति ब्राह्मणवेषधारी कृष्णः उक्तवान् ।

तदा मयूरध्वजस्य पत्नी - ''पत्नी पत्युः शरीरस्य अर्धभागः इति खलु उच्यते ? अतः सिंहस्य आहारार्थं मां नयतु । राजानं त्यजतु'' इति प्रार्थितवती ।

तदा कृष्णः - ''पत्नी पत्युः वामभागः भवति । किन्तु सिंहः राज्ञः शरीरस्य दक्षिणभागम् इच्छन् अस्ति'' इति उक्तवान् ।

''तथैव भवतु । मम शरीरं कर्तयित्वा दक्षिणभागम् एव स्वीकरोतु'' इति उक्तवान् मयूरध्वजः ।

कृष्णः तथा कर्तुं यदा उद्युक्तः तदा राज्ञः वामनेत्रतः अश्रु आगतम् । तत् दृष्ट्वा कृष्णः - ''रुदता दीयमानं दानं मया न स्वीक्रियते, मनःपूर्वकं दानम् एव श्रेष्ठं भवति'' इति उक्तवान् ।

''महात्मन् ! मम शरीरस्य दक्षिणभागः दानस्य योग्यः जातः । किन्तु तत् भाग्यं वामभागेन न लब्धं खलु ? अतः खेदेन मम वामनेत्रं रुदत् अस्ति'' इति उक्तवान् राजा ।

अनुक्षणम् एव कृष्णः निजरूपेण प्रत्यक्षीभूय मयूरध्वजम् अतिप्रीत्या आलिङ्गितवान् । राज्ञः धर्मनिष्ठां, दानगुणं च दृष्ट्वा कृष्णः अतीव सन्तुष्टः । अनन्तरं कृष्णः राज्ञः यागसमाप्तिपर्यन्तं तत्रैव स्थित्वा धर्मराजस्य यागस्थलं मयूरध्वजम् अपि नीतवान् ।



# भवन्तः जानन्ति किम् ?

## 'यूनिकार्न्' मृगः



'यूनिकार्न्' कश्चन कल्पितः प्राचीनः प्राणी । किन्तु बहुपूर्वं तादृशः प्राणी वस्तुतः आसीत् इति जनानां विश्वासः । ब्रिटिष्राजवंश-सूचकेषु चिह्नेषु खेटकानां उपरि एकत्र सिंहस्य अपरत्र युनिकार्न्मृगस्य च चित्रं चित्रितमस्ति । ललाटे एकेन शृङ्गेण युक्तस्य विशिष्टस्य अश्वस्य आकारः अस्ति अस्य प्राणिनः । प्रथम-एलिजबेतराज्ञ्याः समीपे युनिकार्न्मृगस्य शृङ्गम् आसीत् । तस्य मूल्यम् अत्यधिकम् आसीत् । मनुष्यं विषात् रक्षितुम् अर्हा अद्भुत-शक्तिः अस्ति तस्य इति श्रूयते । पुराणकथासु सिंहयूनिकार्नयोः परस्परं शत्रुता आसीत् इति उक्तम् अस्ति । यदा उभयोः मेलनं भवति तदा अन्यतरस्य नाशेन एव कलहस्य अन्त्यं भवति स्म । अतः एव उपरि अपि तयोः चित्राणि पृथक्, पृथक् चित्रितानि सन्ति । ब्रिटिष्राजवंशस्य चिह्नेषु तस्य महत्त्वभूतं स्थानं कल्पितम् अस्ति ।

## इन्द्रधनुः

### काचकस्य कुशलकर्मिणः



काचकस्य, सीसकस्य, वर्णानां च उपयोगेन कृशं काचकस्य वातायनं निर्मीयते । आदौ वातायनस्य रेखाचित्रं रच्यते । एतत् कार्टून् इति उच्यते । एतानि सीसकस्य रेखाः, काचकस्य वर्णान् च सूचयन्ति । मध्ययुगे एतादृशान् स्थूलान् काचकान् कुशलकर्मिणः स्वेषु लघुकार्यागारेषु निर्मान्ति स्म । किन्तु ते काचकाः इदानीं सर्वत्र अपेक्षितवर्णीयाः एव उपलभ्यन्ते । यदा कार्टून् सिद्धं भवति तदा काचकान् अपेक्षितेन आकारेण कर्तयित्वा तान् सीसकस्य रेखाणाम् उपरि संस्थाप्य उष्णीकृत्य योजयन्ति । काचकस्य, आवरणस्य च सिद्धेः अनन्तरं तस्य उपरि लघुचित्राणि लेपयन्ति । मध्ययुगे अनेके अविद्यावन्तः एव आसन् इति कारणेन एतादृशानि काचकवातायनानि चर्च्व्यवहारे पाञ्चालिकापुस्तकवत् मनोरञ्जकानि आसन् ।

# दूरदृष्टिः

रामपुरे रुद्रेशः नाम मध्यमवर्गीयः गृहस्थः आसीत् । तस्य एका पत्नी, द्वौ पुत्रौ च आसन् । रुद्रेशः स्वभगिनीं शारदां विमलपुरस्य विश्वनाथाय दत्त्वा विवाहं कृतवान् आसीत् । कदाचित् शारदायाः पतिः विश्वनाथः तीव्रया हृदयवेदनया पीडितः अभवत् । तदा रुद्रेशस्य पत्नी सुजाता स्वपतिं तत्र प्रेषयित्वा विश्वनाथं स्वगृहम् आनायितवती । उत्तमाय वैद्याय प्रदर्श्य चिकित्साम् अपि कारितवती । ननान्दा शारदया सह विश्वनाथस्य सेवां कृतवती च । एवं त्रिषु मासेषु पूर्णतया स्वस्थः विश्वनाथः पत्न्या सह स्वगृहं गतवान् रुद्रेशाय, सुजातायै च हृत्पूर्वकं धन्यवादान् समर्प्य ।

भगिन्याः गमनानन्तरं कदाचित् भोजनोत्तरं पत्न्या सह सम्भाषमाणः रुद्रेशः तां पृष्टवान् - ''ननान्दु, तस्याः पत्युः च विषये भवती असदृशीं प्रीतिं प्रदर्शितवती अस्ति । भवत्सदृशीम् अन्यां कामपि अहं न दृष्टवान् अस्मिन् लोके । भवत्याः एतादृशं वात्सल्यभावं दृष्ट्वा मम महान् आनन्दः जातः अस्ति'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा सुजाता हसन्ती उक्तवती - ''मयि न केवलं वात्सल्यभावः, अपि तु दूरदृष्टिः व्यवहारज्ञानं च अस्ति'' इति ।

तस्याः वचनेन आश्चर्यचकितः रुद्रेशः 'तत् किम्' इति भावेन तां दृष्टवान् ।

''सामान्यतः सर्वाः महिलाः स्वस्य ननान्दा दीर्घसुमङ्गली एव भवतु इति चिन्तयन्ति । पत्युः मरणानन्तरं सा पितृगृहमेव आगच्छति इति लोकानुभवः । यदि पत्युः मरणं भवेत् तर्हि भवतः भगिनी पुत्रैः सह अस्माकं गृहम् एव आगमिष्यति । तदा तु आजीवनं तेषां सेवा करणीया भविष्यति । तादृशीं स्थितिं पूर्वमेव ऊहित्वा अहं ननान्दुः पत्युः चिकित्सां कारयित्वा सः स्वस्थः यथा स्यात् तथा कृतवती'' इति उक्तवती सुजाता ।

पत्न्याः उत्तरं श्रुत्वा हसनीयम् उत रोदनीयम् इति न ज्ञातवान् रुद्रेशः ।



*स्वातन्त्र्यस्य सुवर्णमहोत्सवस्य अवसरे चन्दमामायाः उपहारः*

# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*(कान्पुरविद्रोहस्य अनन्तरं नानासाहेबः मराठानां राजत्वेन अभिषिक्तः । तत् ब्रिटिष्संस्था आत्मनः अगौरवकरम् अमन्यत । अतः जनरल् ह्यावलाक्वर्यस्य नायकत्वे ब्रिटिष्सेना कान्पुरस्य उपरि आक्रमणं कृतवती । किञ्चित्कालं वीरोचितरूपेण युद्धं कृत्वा, पश्चात् यदा युद्धे पराजयः निश्चितः इति अवगतं तदा नानासाहेबः ततः पलायितवान् । ये बन्धिनः अभवन् तेभ्यः बहु हिंसां दत्त्वा तान् सर्वान् मारितवान् ह्यावलाक् । तेन ब्रिटिष्-साम्राज्यविषयकः विरोधः इतोऽपि अधिकः अभवत् । अनन्तरम्...)*

माहोल्मध्ये एकस्मिन् ब्रिटिष्सेना-शिबिरे आनन्दमयं वातावरणम् आसीत् । बहुषु प्रान्तेषु अधिकतया पराजयमेव प्राप्तवन्तः ब्रिटिष्सैनिकाः क्रि.श.१८५८ तमवर्षस्य आरम्भे नवोत्साहं प्राप्तवन्तः । तस्य सेनाशिबिरस्य नायकत्वेन सर् हाग् रोस्नामकः अनुभवी सेनाधिपतिः आगतः आसीत् । सः भारतस्य इतिहासं तात्कालिकस्थितिं च सम्यक् जानाति स्म । सः कदाचित् एकस्मिन् विशाले मण्डपे इतस्ततः अटन् स्वपृष्ठतः विद्यमानान् भारतीयसैनिकान् उद्दिश्य - ''भोः ! झान्सीराज्ञी लक्ष्मीबायी स्वस्य सैन्यस्य नेतृत्वं स्वयं वहति इति भवन्तः भावयन्ति वा ? एतादृशे साहसकार्ये राज्ञी आत्मानं नियोजितवती इति विषयः तु मया इतः पूर्वं न श्रुतः आसीत्'' इति उक्तवान् ।




''प्रभो ! सा वस्तुतः असामान्यधैर्येण, साहसेन च युता राज्ञी अस्ति'' इति उक्तवान् कश्चित् सैनिकः ।

तदा हाग्रोस् हसन् - ''सा अप्रतिम-वीरा, धैर्यशालिनी च ? किमपि अजानतीः प्रजाः भाययन्ती स्थिता सा भवतां दृष्ट्या पराक्रमशालिनी राज्ञी स्यात् नाम । किन्तु युद्धरङ्गे अपेक्षितं कौशलम् अन्यत् एव । अस्माकं गोलकास्त्राणि सा कति दिनानि यावत् सम्मुखीकुर्यात् ? एकस्मिन् क्षणे एव सा छिद्रविच्छिद्रा भविष्यति'' इति उक्तवान् ।

तदा अपरः सैनिकः तस्य अभिप्रायं निराकुर्वन् - ''प्रभो ! वयं भवतः सेवकाः । भवतः विश्वासपात्राणि च । अस्माभिः उच्यमानम् अक्षरशः सत्यमेव । सा तु सामान्या स्त्री न । अस्माकं गोलकास्त्रं यं कमपि क्षणे एव नाशयति इत्यत्र नास्ति सन्देहः । किन्तु तथा कर्तुं सा भवते अवकाशं दद्यात् इति चिन्तयति वा भवान् ? यदि भवान् गोलकास्त्राणि नेष्यति तर्हि सा अपि गोलकास्त्रैः एव भवन्तं सम्मुखीकरिष्यति'' इति उक्तवान् ।

तदा हाग्रोसः कुतूहलेन - ''तस्याः समीपे कति गोलकास्त्राणि सन्ति ?'' इति पृष्टवान् ।

''कति सन्ति इति वयं न गणितवन्तः । अपि च तानि प्रदर्शनार्थं न स्थापितानि खलु ? तानि सर्वाणि प्रासादस्य पूर्वदिशि विद्यमानस्य विशालमण्डपस्य समीपे शस्त्रास्त्रसङ्ग्रहालये सन्ति'' इति उक्तवान् कश्चित् वृद्धः सैनिकः ।

तदा हाग्रोसः झान्सीराज्यस्य मानचित्रं पश्यन् - ''एतस्य वटवृक्षस्य समीपे विद्यमानस्य मण्डपस्य विषये खलु भवान् उक्तवान् ? तस्य समीपे एव शस्त्रसङ्ग्रहालयः अपि अस्ति किम् ?'' इति पुनः पृष्टवान् ।

स्थानीयाः सैनिकाः तदा परस्परं मुखं दृष्टवन्तः । आकस्मिकतया राजभवनस्य रहस्योद्घाटनेन मनसि उत्पन्नं अपराधभावं तेषां मुखभावः वदति स्म ।

''स्वामिनः विश्वासपात्रैः भवितव्यम् इति वदति खलु भवतां संस्कृतिः ? स्वामी मातापितृवत् आदरेण द्रष्टव्यः इति यः सम्प्रदायः अस्ति तम् अधुना भवन्तः विस्मृतवन्तः किम् ? अधुना ईस्ट-इण्डिया-संस्था एव भवतां स्वामिनी । सा भवद्भ्यः अन्नवस्त्रादिकं दत्त्वा रक्षति । अतः

तस्याः विषये विधेयतया व्यवहारः भवतां कर्तव्यम् । भवन्तः सम्यग्रीत्या यदि सहकुर्वन्ति तर्हि योग्यं पारितोषिकम् अपि प्राप्स्यन्ति'' इति उक्त्वा स्नेहेन तेषां स्कन्धे हस्तं स्थापयित्वा तेभ्यः सुवर्णनाणकानि दत्तवान् हाग्रोसः ।

* * *

झान्सीराज्ञी लक्ष्मीबायी राजभवनस्य सैन्याधिकारिणः पुरप्रमुखान् च उद्दिश्य - ''आदरणीयाः ज्येष्ठाः, बान्धवाः, मित्राणि च ! अस्माकं नगरे विद्यमानस्य ईस्ट-इण्डिया-संस्थाकार्यालयस्य नाशनेन एव तस्याः पीडातः वयं मुक्ताः इति भवत्सु अनेके भावितवन्तः स्युः । तत् न युक्तम् । सप्तसमुद्राणां पारम् आगताः ते एकेन पराजयेन भीताः न भवन्ति, न वा प्रतिगमिष्यन्ति । मत्कुणसदृशाः रक्तपाः ते आक्रान्ताम् एनाम् अस्माकं मातृभूमिं सुलभतया त्यक्त्वा न गमिष्यन्ति । ब्रिटिष्-सैन्यं झान्सीराज्यस्य दिशि आगच्छत् अस्ति इति वार्ता आगता अस्ति । अस्मिन् अवसरे अस्माभिः किं करणीयम् इति इदानीं चिन्तनीयम् । तदर्थं भवतां सर्वेषां मार्गदर्शनम् अपेक्षितम्'' इति गम्भीर-ध्वनिना उक्तवती ।

तदा राजपरिवारस्य कश्चित् वृद्धः उत्थाय - ''अम्ब ! वयं भवतीम् उपदेष्टुम् अत्र न सम्मिलिताः, अपि तु भवत्याः अनुज्ञां पालयितुम्'' इति उक्तवान् ।

''महान् सन्तोषः । वीरपुत्राः ! भवन्तः मातृभूमेः गौरवस्य रक्षणाय, परित्राणाय, परिवर्धनाय च रक्ततर्पणमपि कर्तुं सिद्धाः



सन्ति इति अहं जानामि एव'' इति उक्तवती लक्ष्मीबायी वीरावेशेन ।

''अम्ब ! भवत्याः वचनम् अक्षरशः सत्यमेव । भवत्याः आज्ञां वयं शिरसा पालयिष्यामः'' इति एककण्ठेन सम्भूय सर्वे उक्तवन्तः ।

''तर्हि मातृभूमेः अपमाननं मरणं चेति अनयोः मध्ये भवद्भिः मरणमेव चेतव्यं भवेत्'' इति उक्तवती लक्ष्मीबायी इतोऽपि आवेशेन ।

''तत् अस्माकं सौभाग्यं भावयामः वयम्'' इति सर्वे सन्तोषेण उक्तवन्तः ।

युद्धार्थं लक्ष्मीबाय्या प्रतीक्षा करणीया न अभवत् । सप्ताहाभ्यन्तरे शत्रूणां चलन-वलनम् आरब्धम् । झान्सीदुर्गस्य अन्तः स्थितात् शिबिरात् सेना दुर्गस्य पुरतः



आगत्य सम्मिलितवती । राज्ञी उन्नतस्थले स्थित्वा सैनिकान् उद्दिश्य भाषणं कृतवती । सैनिकाः समवस्त्राणि धृत्वा, अश्वान् आरुह्य क्षणाभ्यन्तरे एव अग्रे आगताः । पश्चात् जयकारं कुर्वन्तः ते राज्ञीम् अनुसृतवन्तः ।

एकदिनं यावत् भीकरयुद्धं प्रवृत्तम् । सायङ्कालः अभवत् । युद्धभूमौ उद्गतायां धूल्याम् अस्तङ्गच्छतः सूर्यस्य बिम्बः अपि न दृष्टः । यदा धूलेः आवरणम् अपसृतं तदा शत्रवः अपक्रामन्तः सन्ति इति झान्सीराज्यीयैः ज्ञातम् ।

तदा ''जयतु जयतु राज्ञी लक्ष्मीबायी'' इति सहस्राधिकाः सैनिकाः, प्रजाः च जयघोषणं कृतवन्तः ।

राज्ञी राजप्रासादं प्रतिनिवृत्य शयनगृहं प्रविष्टवती । परिचारकैः आनीतस्य दीपस्य प्रकाशे सुप्तस्य दत्तकपुत्रस्य मुखं तदेक-दृष्ट्या किञ्चित्कालं दृष्टवती सा ।

अनन्तरं सा व्रणितानां सैनिकानां समीपं गत्वा तेषां चिकित्सार्थं योग्यां व्यवस्थां कल्पितवती । ततः सा व्रणितानाम् अश्वानां समीपं गत्वा अश्वरक्षकद्वारा तेषां स्थितिं ज्ञातवती । एवं सूर्योदयपर्यन्तमपि सर्वेषां योगक्षेमविचारणेन एव स्वस्य कालं नीतवती सा ।

सूर्ये उदिते सति युद्धं पुनः आरब्धम् । अधुना झान्सीसैनिकैः न केवलं खड्गाः भुषुण्डयः च सम्मुखीकरणीयाः आसन्, अपि तु गोलकास्त्रम् अपि सम्मुखी-करणीयम् अभवत् । शत्रुपक्षे अपि शताधिकाः जनाः मृतवन्तः । सूर्यास्ता-नन्तरम् अपि अन्धकारस्य व्याप्तिपर्यन्तम् अपि युद्धम् अनुवृत्तम् । अत्रान्तरे अकस्मात् आकाशे महती अग्निज्वाला लक्षिता सर्वैः । अर्धरात्रसमये प्रासादात् प्रयुक्तेन गोलकास्त्रेण सर्‌ह्यूरोसस्य मुख्यः सेनाधिकारी मारितः अभवत् ।

''हे भगवन् ! राज्ञी एव गोलकास्त्रेण सर्वान् मारयन्ती अस्ति'' इति आक्रन्दनं कृतवान् सेनाधिपतिः ।

एतेन दिग्भ्रान्तः सर्‌ह्यूरोसः किञ्चित्कालानन्तरं जागरितः सन् स्वस्य युद्धतन्त्रं परिवर्तितवान् ।

अनन्तरदिने अर्धसैन्यं झान्सीसैन्येन सह युद्धम् अकरोत् । अन्यत् अर्धसैन्यं प्रासादस्य पूर्वदिशं प्रति गतम् । एतं विषयं झान्सीसेनाधिकारिणः केऽपि न लक्षितवन्तः । प्रासादस्य प्रधानद्वारस्य रक्षणे

झान्सीराज्यस्य समग्रा सेना मग्ना आसीत् ।

तदा अकस्मात् महान् कर्णविदारकः शब्दः श्रुतः प्रसादस्य पूर्वभागे अग्निपर्वतस्य इव स्फोटः अभवत् । शिलामृत्तिकादयः आकाशे उद्गताः । तादृशः ध्वनिः बहुकालं यावत् प्रतिध्वनन् एव आसीत् ।

आङ्ग्लेयाः शस्त्रास्त्राणां सङ्ग्रहालयं गोलकास्त्रैः स्फोटितवन्तः आसन् । आङ्गलाः स्वसैन्ये विद्यमानान् सैनिकान् प्रलोभ्य शस्त्रास्त्राणां सङ्ग्रहस्य रहस्यस्थानं ज्ञातवन्तः आसन् । विशालः वटवृक्षः, केचन तिन्त्रिणीवृक्षाः च अग्निसात् अभवन् । किञ्चित्समये एव सर्वे वृक्षाः अग्नौ दग्धाः सन्तः स्थाणवः अभवन् । बहुजनाः प्राणैः वियुक्ताः अभवन् ।

यद्यपि अपरत्र झान्सीसैन्यं युद्धनिरतम् आसीत्, तथापि प्रासादः दुःखस्य भयस्य च वातावरणेन आवृतः अभवत् । तावति काले एका शुभवार्ता तत्र आगता । नानासाहेबस्य प्रधानसेनाधिपतित्वेन कार्यं कृतवान् तात्यटोपेवर्यः लक्ष्मीबाय्याः साहाय्यार्थम् आगच्छन् आसीत् ।

भित्तेः भेदनं कृतवती ब्रिटिष्सेना अनतिकाले एव प्रासादस्य समीपम् आगतवती एव । किन्तु अन्तः प्रवेष्टुं सा न शक्तवती । गोलकास्त्रस्य प्रहारेण यत्र भित्तिः शिथिला जाता आसीत् तत्र अत्यन्तम् अधिका रक्षणव्यवस्था कल्पिता रात्रौ । ब्रिटिष्सैनिकाः महतीः निःश्रेणीः आनीतवन्तः । डिक्, मैकेल्जान्, मोसम् फाक्स् इत्येते चत्वारः ब्रिटिष् अधिकारिणः निःश्रेण्याः साहाय्येन उपरि गतवन्तः । किन्तु अनुक्षणमेव ते भुषुण्ड्या प्रहृताः पक्षिणः इव अधः पतिताः ।

यदा शत्रुसैन्यं पार्श्वे परिवृत्य राजमार्गेण मुख्यद्वारस्य समीपम् आगतं तदा सपदि उच्चैः शङ्खध्वनिः श्रुतः । तत्क्षणे एव भित्तेः उपरिष्टात् दुर्गस्य रक्षणमण्डपात् च झान्सीसैनिकैः गोलकास्त्रेण निरन्तरप्रहारः कृतः शत्रूणाम् उपरि । तदा सः प्रदेशः अग्निना ज्वलन् इव भासते स्म । भयङ्करशब्दे व्याप्ते, शत्रूणाम् उपरि विविधानि शस्त्रास्त्राणि निरन्तरं प्रयुक्तानि । तस्मिन् एव समये तेषां दक्षिणभागतः ब्रिटिष्सैनिकानां प्रतिनिवृत्त्यर्थं शङ्खध्वनिः श्रुतः ।

*(अनुवर्तते)*





# भाषमाणं फलम्

विशालपुरस्य राज्ञः समीपे बहवः धेनवः आसन् । गोपालकाः प्रतिदिनं गाः स्वीकृत्य पर्वतस्य समीपे विद्यमानं शाद्वलं गच्छन्ति स्म । सायङ्काले गाः स्वीकृत्य प्रत्यागच्छन्ति स्म च । कदाचित् गवां संख्यायां दिने दिने न्यूनता आरब्धा । अतः महाराजः गवाम् अदृश्यतायाः कारणस्य अन्वेषणाय स्वस्य त्रीन् अपि पुत्रान् प्रेषितवान् ।

प्रातःकाले प्रस्थिताः राजकुमाराः सायङ्कालसमये किञ्चित् वनं प्राप्तवन्तः । तत्र काचित् कुरूपिणी महिला तेषां पुरतः आगता । सा तान् पृष्टवती - ''भोः ! भवन्तः कुत्र प्रस्थिताः ?'' इति ।

तदा कुपिताः राजकुमाराः उक्तवन्तः - ''वयं यत्र कुत्रापि गच्छामः । तत् भवत्या किमर्थं प्रष्टव्यम् ?'' इति ।

तदा नीचैः किमपि वदन्ती सा महिला ततः गतवती । राजकुमाराः किञ्चित् अग्रे गत्वा अन्धकारप्रसारात् पूर्वमेव किञ्चित् दुर्गं प्राप्तवन्तः । दुर्गस्य अन्तः तैः तेषां धेनवः अपि दृष्टाः । यदा ते दुर्गं प्रविश्य किञ्चिद्दूरं गताः तदा तत्र सुप्तवतीं काञ्चित् वृद्धां राक्षसीं दृष्टवन्तः । तेषां पादशब्देन जागरिता सा उत्थितवती ।

राजकुमाराः त्रयः अपि तस्याः समीपं गत्वा - ''मातः ! वयम् उद्योगम् अन्विष्य आगताः स्मः । यदि भवती किमपि कार्यं दद्यात् तर्हि वयम् अत्रैव वासं करिष्यामः'' इति उक्तवन्तः ।

तदा वृद्धा राक्षसी ज्ञातवती यत् ते गवां निमित्तम् एव आगताः इति । कुटिला सा वृद्धा यद्यपि शक्तिहीना आसीत्, तथापि उपायेन शत्रून् मारयति स्म । एते राजकुमाराः अपि उपायेन मारणीयाः इति सङ्कल्प्य सा तान् उक्तवती - ''अस्तु, अहं

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

कार्यं दास्यामि । अधुना गोदोहनसमयः । अतः भवन्तः प्रथमं क्षीरं दुग्ध्वा आनयन्तु । श्वः आरभ्य गोपालनकार्यं भवताम् एव भविष्यति'' इति ।

तस्याः वचनम् अङ्गीकृत्य राजकुमाराः गोदोहनं कृत्वा क्षीरम् आनीय तस्यै दत्तवन्तः । राक्षसी तत् क्षीरम् उष्णीकृत्य तान् आहूय - ''भोः, प्रयाणेन भवन्तः श्रान्ताः सन्ति । अतः प्रथमं किञ्चित् क्षीरं पिबन्तु'' इति वदन्ती तेभ्यः त्रिभ्यः अपि विषमिश्रितं क्षीरं दत्तवती । तस्याः कपटताम् अजानन्तः ते त्रयः अपि क्षीरं पीत्वा मृताः । राक्षसी तेषां त्रयाणाम् अपि शरीराणि एकस्यां पेटिकायां गूहितवती ।



कानिचन दिनानि अतीतानि । पुत्राः न प्रत्यागताः इति राजा चिन्ताक्रान्तः अभवत् । तदा गोपालकेषु अन्यतमः मुकुन्दः तस्य समीपम् आगत्य उक्तवान् - ''प्रभो, अहं गत्वा राजकुमाराणाम्, अदृश्यतां गतानां धेनूनां च अन्वेषणं कृत्वा आगमिष्यामि'' इति ।

राजा एतत् अङ्गीकृत्य तं प्रेषितवान् । मुकुन्दः अपि राजकुमारैः गतेन मार्गेण एव गतवान् । मार्गे तस्य पुरतः अपि कुरूपिणी महिला आगता । सा तं पृष्टवती - ''भोः ! भवान् कुत्र गच्छन् अस्ति ?'' इति ।

मुकुन्दः स्वस्य आगमनकारणं ताम् उक्तवान् । तदा सा उक्तवती - ''इतः किञ्चिद्दूरे एकं दुर्गम् अस्ति । तत्र कुटिला काचित् वृद्धा राक्षसी वसति । सा मम अनुजायाः साहाय्येन एव भवतः राज्ञः गाः अपहृतवती । किन्तु अनन्तरं सा मम अनुजाम् एव मारितवती । प्रायः एतावति काले सा राजकुमारान् अपि मारितवती स्यात् । राजकुमाराः यदा अत्र आगताः आसन् तदा तान् अहम् एतं विषयं वक्तुम् इष्टवती । किन्तु ते मया सह सम्भाषणं कर्तुम् अनिच्छन्तः अग्रे गतवन्तः'' इति ।

एतत् श्रुत्वा मुकुन्दः - ''भवत्याः अनुजा का ? सा किमर्थं गाः अपहृतवती ?'' इति पृष्टवान् ।

''वृद्धा सा राक्षसी जीवननिर्वहणे बहुधा क्लेशम् अनुभवन्ती आसीत् । उपायेन मम अनुजायाः स्नेहं सम्पाद्य 'यदि भवती गाः चोरयति तर्हि तत्र अर्धभागं भवत्यै दास्यामि' इति मम अनुजाम् उक्त्वा एतस्याः द्वारा उपायेन गाः दुर्गं प्रति आनायितवती । यदा तस्याः कार्यसिद्धिः




अभवत् तदा निर्दयतया सा मम भगिनीं मारितवती । अन्यायमार्गेण अनुजां मारितवत्याः तस्याः विषये महान् कोपः अस्ति मम । किन्तु अधुना अहं वृद्धा अस्मि । तेन मम मन्त्रशक्तिः अपि नष्टा अस्ति'' इति खेदेन उक्तवती वृद्धा ।

तस्याः वचनं श्रुत्वा मुकुन्दः - ''अम्ब ! राक्षसीतः राजकुमाराणां, गवां च विमोचनाय यदि कोऽपि उपायः स्यात् तर्हि सूच्यताम्'' इति उक्तवान् ।

''यद्यपि मयि मन्त्रशक्तिः नास्ति, तथापि वस्तुद्वयम् इदानीमपि मम समीपे अस्ति, येन तस्याः प्रतीकारम् अहं कर्तुं शक्नोमि'' इति उक्त्वा सा कुरूपिणी महिला मुकुन्दाय एकं फलं, त्रीन् शिलाखण्डान् च दत्त्वा पुनश्च - ''एतत् फलं भाविनः अपायस्य विषये भवन्तं पूर्वम् एव जागरयति । एतेन कार्यं सम्पाद्य अन्ते अस्य बीजं निष्कास्य चूर्णीकृत्य जले मिश्रीकृत्य मृतानां शरीरं तेन जलेन सिञ्चति चेत् ते जीविष्यन्ति । एतान् शिलाखण्डान् क्षिप्त्वा भवान् यत् वदति तत् सिद्धं भविष्यति । भवान् तां दुष्टां मारयितुं समर्थः इति निश्चित्य एव एतत् भवते यच्छन्ती अस्मि । शुभं भवतु'' इति उक्तवती मन्त्रवादिनी ।

तया दत्तानि वस्तूनि स्वीकृत्य मुकुन्दः अग्रे गत्वा दुर्गं प्राप्तवान् । तया वृद्धराक्षस्या मिलित्वा - ''अम्ब ! मह्यं कमपि उद्योगं ददातु'' इति प्रार्थितवान् ।

मुकुन्दः अपि गवां निमित्तमेव आगतः अस्ति इति ऊहित्वा सा राक्षसी - ''भवतु । भवान् मम गाः पालयन् अत्रैव वसतु'' इति उक्त्वा अन्तः गत्वा क्षीरम् आनीय बहु वात्सल्यं प्रदर्शयन्ती तस्मै दत्तवती ।

तदा - 'मा पिबतु । तस्मिन् विषम् अस्ति' इति फलेन जागरितः मुकुन्दः, राक्षसी यथा न जानीयात् तथा उपायेन तत् क्षिप्तवान् । 'क्षीरस्य पानस्य अनन्तरम् अपि एषः जीवन् अस्ति खलु ?' इति आश्चर्यम् अनुभवन्ती वृद्धा तम् उक्तवती - ''वत्स ! भवान् श्रान्तः स्यात् । तत्र शय्या प्रसारिता अस्ति । गत्वा शयनं करोतु'' इति ।

मुकुन्दः यदा शय्यायाः समीपं गतः तदा - 'तत्र शयनं मा करोतु । अधः गर्तः अस्ति' इति फलेन जागरितः सन् मौनेन पार्श्वे स्थितवान् । राक्षस्याः गमनानन्तरं यदा सः शय्याम् उन्नीतवान् तदा तत्र कण्टकैः पूरितः महान् गर्तः तेन दृष्टः । 'द्वितीयवारम् अपि

अहं मरणात् रक्षितः' इति मुकुन्दः सन्तुष्टः ।

अनन्तरं सः राजकुमारान् दुर्गे सर्वत्र अन्विष्टवान् । पेटिकायां राजकुमाराणां शवाः लब्धाः तेन । किन्तु कुरूपि-महिलायाः भगिन्याः शवः तु कुत्रापि न लब्धः एव । 'शवानां नयनं तु असाध्यम् । अपि च एतस्य फलस्य उपयोगः अपि इतः परं मम नास्ति । अतः एतान् जीवयित्वा एव नेष्यामि' इति निश्चित्य मुकुन्दः फलस्य बीजं चूर्णीकृत्य जले मिश्रीकृत्य राजकुमाराणां शवान् तेन सिञ्चितवान् । तदा उज्जीविताः ते राजकुमाराः मुकुन्दम् अभिज्ञातवन्तः ।

पश्चात् ते चत्वारः अपि सर्वाः गाः मोचयित्वा दुर्गात् बहिः आगतवन्तः । तत्र ते कुरूपिमहिलायाः अन्वेषणं कृतवन्तः । किन्तु सा कुत्रापि न दृष्टा तैः । ततः ते अग्रे गतवन्तः ।

किञ्चित्कालानन्तरं जागरिता राक्षसी यथावत् विद्यमानां मुकुन्दस्य शय्यां दृष्ट्वा उत्पन्नशङ्का सती साक्षात् गोष्ठं गतवती । तत्र गाः अदृष्ट्वा 'मुकुन्दः एव गाः नीतवान् अस्ति' इति ज्ञात्वा सा उच्चैः आक्रोशन्ती आगतवती । राजकुमाराः मुकुन्दः च तस्याः आक्रोशनं दूरात् एव श्रुतवन्तः । वेगेन समीपम् आगच्छन्तीं तां दृष्ट्वा मुकुन्दः स्वसमीपे विद्यमानेषु शिलाखण्डेषु एकं पृष्ठतः क्षिप्त्वा - 'कण्टकानां सस्यानि उत्पन्नानि भवन्तु' इति उक्तवान् । झटिति तत्र कण्टकसस्यानि उत्पन्नानि ।

तानि कष्टेन तीर्त्वा समीपम् आगतवती राक्षसी । तदा मुकुन्दः अन्यं शिलाखण्डं क्षिप्त्वा - 'अग्निः भवतु' इति उक्तवान् । अनुक्षणं राक्षसीं परितः अग्निः उत्पन्नः । अग्नितः अपि कथञ्चित् मोक्षं प्राप्य पुनश्च वेगेन तान् अनुसृतवती राक्षसी । पुनः समीपे आगतां राक्षसीं दृष्ट्वा तृतीयं शिलाखण्डं क्षिप्त्वा 'प्रवाहः भवतु' इति उक्तवान् मुकुन्दः । जलप्रवाहम् अपि तीर्त्वा आगन्तुं प्रयत्नं कृतवती राक्षसी । परं वेगेन प्रवहता जलेन सा कुत्रापि नीता एव ।

अनन्तरं सायङ्कालसमये राज्यं प्राप्तवन्तः ते । प्रवृत्तं सर्वं श्रुत्वा महाराजः बहु सन्तुष्टः सन् मुकुन्दं बहुधा प्रशंसितवान्, विशेषतः सत्कृतवान् च ।



# चित्रशीर्षिका-स्पर्धा ★ पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां फरवरि- २००० मासे प्रकटयिष्यामः ।**





★ उपरितनं चित्रद्वयं पश्यन्तु । ★ युक्तां शीर्षिका परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा दिसम्बर मे - २५ तः पूर्वम् एव प्रेषयन्तु । ★ अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । ★ स्पर्धायां विजेता १०० /- रूप्यकात्मकं रितोषिकं प्राप्सयति । ★ शीर्षिका समपत्रे (प्रोस्ट-कार्ड) एव लेखनीया । ★ तत्र अन्यः विषयः न लेखनीयः । ★ अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु-५६० ०८५**

'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः-

प्रथमचित्रम् - अलसः बालः चिन्तामग्नः कुरुते कालं व्यर्थम् ।

द्वितीयचित्रम् - चतुरा बाला नाट्यविलोला लभते लाभम् अपूर्वम् ।

प्रेषकः - नागेश अडिगः एल्., गोणीबीडु, ता - मूडिगेरे, चिक्कमगलूरु जिल्ला - ५७७ १५१




Printed by B.V. REDDI at Prasad Process Pvivate Ltd., Chandamama Building, Chennai- 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K.Salai, Vadapalani, Chennai- 600 026 (India) Editor : NAGI REDDI.

